अखिलभारतीय–प्राच्यविद्यासम्मेलनम्

शतवर्षमहोत्सवग्रन्थमाला–१४

# महाराष्ट्रस्य विद्यमानानि संस्कृतनियतकालिकानि


डॉ. सौ. कल्याणी अनन्तः काले

प्रधानसंपादकः

आचार्यः श्रीनिवासः वरखेडी

कुलगुरु

संपादकः

आचार्यः मधुसूदनः पेन्ना

संचालकः संशोधन–प्रकाशनविभागः




राष्ट्रहिताय संस्कृतम्


कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः

रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

तथा

न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 14

# महाराष्ट्रस्य विद्यमानानि संस्कृतनियतकालिकानि

डॉ. कल्याणी अनन्तः काळे

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः




कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
**2020**

शीर्षकम् — महाराष्ट्रस्य विद्यमानानि संस्कृतनियतकालिकानि

लेखक: — डॉ. कल्याणी अनन्त: काळे

प्रधानसंपादक: — आचार्य: श्रीनिवास: वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादक: — आचार्य: मधुसूदन: पेन्ना
संचालक: संशोधन–प्रकाशनविभाग:
क.का.सं.वि., रामटेकम्

अखिलभारतीय–प्राच्यविद्यासम्मेलनम् — प्रो. गौतम: पटेल, अध्यक्ष:
प्रो. सरोजा भाटे, सचिवा
प्रो. गणेश: थिटे, उपाध्यक्ष:

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीणा गानु, नागपुर.

प्रकाशनवर्षम् — **2020**

आवृत्ति: — प्रथमा

मूल्यम् — **140.00**

आय.एस.बी.एन. — 978-8183-153-805

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

मुद्रक: — एस.के.प्रिन्टर्स, दिल्ली

प्रकाशक: — कुलसचिव:,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालय:,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.
तथा
न्यु भारतीय बुक कार्पोरेशन, नवी दिल्ली





## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success. My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek — Prof. Srinivasa Varakhedi
10th January 2020 — Vice Chancellor, KKSU

**Kavikulaguru Kalidas Sanskrit University**
**All India Oriental Conference**

**100th Year 50th Session**
**10th-12th January, 2020**

**Chief Patron**
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

**Patron**
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

**AIOC President**
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

**AIOC General Secretary**
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

**AIOC Local Secretary**
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

**Additional Local Secretary**
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

**Organising Committee**
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek
Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

**महाराष्ट्रस्य विद्यमानानि संस्कृतनियतकालिकानि**



**डॉ. सौ. कल्याणी अनन्त: काळे**

# हृद्गतम्!

स्व. अप्पाशास्त्रिराशिवडेकरवर्याणाम् असामान्यं प्रतिभाकौशलं संस्कृतपत्रकारितायां महाराष्ट्रं मूर्धन्यस्थाने विराजयति। महाराष्ट्रस्येदं मूर्धन्यत्वं प्रतिपादयितुं मह्यम् अवसरम् अकल्पयत् तत् वर्तते मम विद्यास्थानम् अर्थात् कविकुलगुरु - कालिदास - संस्कृत - विश्वविद्यालय:। विश्वविद्यालयेन आयोजितस्य अखिल-भारतीय-प्राच्यविद्या-परिषद: प्रकाशितपत्रकात् प्रेरणां प्राप्य अयं शब्दप्रपञ्च: पुस्तकरूपेण प्रकाशतां गत: अत: प्रमुदितेन मनसा अहं कविकुलगुरु-कालिदास-विश्वविद्यालयाय तथैव कुलगुरुभ्य: मान्येभ्य: डॉ. श्रीनिवास-वरखेडीमहाभागेभ्य: धन्यवादान् समर्पयामि।

नियतकालिकानां नियततया प्रकाशनमिति कष्टसाध्यधुरां निर्वाहन्त: पं. वसन्तगाडगीळमहोदया:, डॉ. चन्द्रगुप्त-वर्णेकरमहाभागा:, डॉ. दे.ख. खरवण्डीकरमहाभागा:, डॉ. मधुसूदन-बोपर्डीकर महोदया:, सौ. वीणा गोडबोले महोदया:, श्री. माधव-बडेमहाभागा: इतीमे मान्यवरा: एव पुस्तकस्यास्य मुख्यनायका:। सर्वेषामपि एतेषां मौलिकसहकार्येणैव प्राप्तस्फुरणा अहम् उत्साहेन रचनापूर्तिं कर्तुम् अशक्नवम्। अत: महन्मान्यानां समेषां विद्वद्वर्याणाम् ऋणिण्यस्मि।

येषां पाण्डित्यप्रभावेन प्राय: सर्वेऽपि संस्कृतं पठितुं समुत्सुका: भवन्ति ते सन्ति गुरुवर्या: मान्या: डॉ. मधुसूदनपेन्नामहाभागा:। डॉ. पेन्नामहोदयानाम् अमूल्यमार्गदर्शनेन शुभाशीर्वादै: एव मत्त: इयं संस्कृतसेवा भवति अत: तेभ्य: कार्तज्ञं व्याहरामि। वात्सल्यपूर्णेन हृदयेन मार्गदर्शनाय नित्यं सज्जानां डॉ. सौ. शारदा गाडगेमहोदयानां , डॉ. रवीन्द्रमुळे महाभागानां स्मरणं मे कर्तव्यमेव । पत्रकारिताविषये येभ्य: प्रत्यक्षाप्रत्यक्षरूपेण

चिन्तनदिशं नित्यं प्रोप्नोमि तेभ्यः वन्दनीयेभ्यः डॉ. बलदेवानन्दसागरमहोदयेभ्यः साधुवादान् अर्पयामि।

कुटुम्बजनानां सहकार्येणैव कार्यसिद्धिः भवति। पाण्डित्य-प्रतिभासम्पन्नाय मम सौभाग्यालङ्काराय पतिवर्याय काळेकुलभूषणाय अनन्ताय तथा च आवयोः पुत्र्यै देवहूतये साधुवादान् समर्पयामि। यस्याः आधारः प्रगतिपथम् आक्रामयति तां वात्सल्यमूर्तिं मम श्वश्रूं श्रीमतीं रंजना काळेमहोदयां प्रति नितरां कार्तज्ञं प्रकटयामि। पितृचरणानां स्व. दिगम्बरराव-अपराजित-महाभागानां पुलकितपावनस्मृतये कार्यमिदं समर्पयामि।

पुस्तकलेखनाय पौनः पुन्येन प्रचोदयन्त्यै मम सख्यै प्रियायै (सौ.प्रिया पेंढारकर) नितरां धन्यवादान् अर्पयामि। टंकणकार्येण पुस्तकस्यास्य पुस्तकत्वं यैः विहितं तेभ्यः मोहनबापटमहोदयेभ्यः धन्यवादान् वितनोमि।

डॉ. सौ. कल्याणी अनन्तः काळे

!

## संकेतसूचिः

| | | |
|---|---|---|
| सं.प.इ. | - | सस्कृत पत्रकारिता का इतिहास |
| सं.शु.स्मा. | - | संस्कृत - वृत्तसेवा शुभारंभ |
| स्मारिका | | |
| सं.प. | - | संस्कृत पत्रकारिता |
| ल.सं.सा.म.यो. | - | ललित संस्कृत साहित्याला महाराष्ट्राचे योगदान |
| सं.भ. | - | संस्कृत भवितव्यम् |
| सं.बा. | - | संस्कृत बालसंवादः |
| गुञ्जा. | - | गुञ्जारवः |
| गी.सु. | - | गीर्वाणसुधा |
| सं.सं. | - | संस्कृत-संवर्धनम् |
| रा.का. | - | रावण-काननम् |
| मालवि. | - | मालविकाग्निमित्रम् |

# अ नु क्र म णि का

# महाराष्ट्रस्य विद्यमानानि संस्कृतनियतकालिकानि

भाषास्वादिभाषा नाम संस्कृतभाषा नेदमिति नूतनमस्माकं कृते। संस्कृतभाषायाः विषये सर्वत्रोच्यते यदेषा भाषा बहुविशेषणयुक्ता, वैभवसम्पन्ना, महती गभीरा, अर्थपूर्णा, मधुरा, सरसा, प्राचीना, शास्त्रीयभाषा, देववाणी, सुरवाणी, गीर्वाणवाणी चास्ति। संस्कारयुक्ता, दोषरहिता परिष्कृता भाषा एव संस्कृतभाषा कथ्यते। भारतीयानामनुपममक्षयं पैत्रिकं धनं नाम संस्कृतभाषेति संस्कृतभाषायाः ख्यातिः। यावदेतद् धनं भारतमधिकरोति न जगति कोऽपि देशस्तावद् देशमूमं ज्ञानेऽधिकर्तुं शक्नोति। संस्कृतभाषायां रचितं साहित्यं सकलमपि संस्कृतभाषायाः गरिमाणं व्यापकताञ्च दर्शयति। वैदिकसाहित्यतः लौकिकसाहित्यपर्यन्तं संस्कृते वैदिकं, वैज्ञानिकम्, अध्यात्मिकं, काव्यशास्त्रं, नाट्यशास्त्रं, गणितशास्त्रं, वास्तुशास्त्रादिकं नैकविधं ज्ञानं दरीदृश्यते। अर्थात् धर्मार्थकाममोक्ष इति चतुर्विधपुरुषार्थं साधयितुं तथैव मनुष्यस्य ऐहिकपारमार्थिकजीवनस्य कृते यद्यद् यदायदा यथावश्यकं तदा मनुष्यः संस्कृतशरणमेव आगच्छति।

एवं सत्यपि विविधैराक्रमणैः आङ्ग्लशासकानां कूटनीत्यनुसारं च कालान्तरेण संस्कृतस्य ह्रासो अभवत्। आङ्ग्लकूटनीतिः भारते मेकॉले इति शिक्षणप्रणालीमानीय मूलभारतीयशिक्षणम् अनाशयत्। संस्कृतमेव भारतीयानाम् अस्तित्त्वस्य मूलमिति जानतां तेषामस्याः शिक्षणप्रणाल्याः प्रथमः आघातः आसीत् संस्कृतस्योपरि। गच्छता कालेन यथेप्सितं तैः तथैव अभवत्। अविलम्बेनैव भारतदेशः विश्वगुरुपदात् च्युतः अभवत्। एवं सति पारतन्त्रे संस्कृतस्य दौर्भाग्यं चिन्तयितुं शक्यते किन्तु स्वतन्त्रे भारतेऽपि संस्कृतस्य सङ्घर्षमालिका नैव समाप्ता। परं जीवने ये संस्कृतं प्रधानतया



स्वीकृतवन्तः संस्कृतानुरागिणः आसन् ते संस्कृतस्य ह्रासं, सङ्घर्षं, दौर्भाग्यञ्च दृष्ट्वा दुःखिताः अभवन्। संस्कृतस्य एतादृशीं दुरवस्थां दृष्ट्वा तथैव भविष्यत्काले राष्ट्रहितं विचिन्त्य संस्कृतार्थं किमपि करणीयमिति संस्कृतानुरागिणः अचिन्तयन्। संस्कृतस्य भाषारूपेण सार्वत्रिकः प्रयोगो भवेत्, राष्ट्रजीवनस्य सर्वेष्वपि क्षेत्रेषु संस्कृतं पुनरागच्छेत् चेति आकाङ्क्षितवन्तः। यथाशक्ति, यथासामर्थ्यं संस्कृतकार्याणि कृतवन्तः। एतेषु संस्कृतकार्येषु प्रभाविसाधनमासीत् संस्कृतनियतकालिकानि संस्कृतसंस्थाश्च। भारते संस्कृतप्रचारप्रसारस्य च कृते एतेषां महदवदानं दरीदृश्यते।

स्वतन्त्रे भारते संस्कृतभाषायाः प्रचारप्रसारस्य च महत्त्वपूर्णं कार्यं संस्कृतनियतकालिकैः संस्कृतसंस्थाभिश्च कृतम्। तत्रापि नियतकालिकानां सातत्येन सुदूरसञ्चारः इति कश्चन समर्पणात्मकचिन्तनस्य संस्कारस्य च विषयो वर्तते। महाराष्ट्रं तु नित्यं पाण्डित्यपरम्परां रक्षति अतः महाराष्ट्रे संस्कृतनियतकालिकानां सद्य अवस्था का? इति चिकीर्षा मनसि समुत्पन्ना तस्मादयं शब्दप्रपञ्चारम्भः जातः।

संस्कृताधारितानि अन्यासु भाषासु नियतकालिकानि भूरिशः सन्ति एव। परं जनसामान्यं प्रति संस्कृभाषां स्संकृतमाध्यमेनैव प्रापयितुं संस्कृतनियतकालिकानां प्रकाशनम् इत्येव येषाम् उद्दिष्टं तेषामेव नियतकालिकानामत्र विशेषो विचारः कृतः अस्ति।

**महाराष्ट्रे संस्कृत-नियतकालिकानाम् उद्भवः विकासश्च -**

नियतकालिकं पत्रकारिता वा आधुनिकयुगस्य प्रमुखोपलब्धिः। इतिहासं निवेदयन्ती रामायण-महाभारतयोः ग्रन्थरचना किं वा यथेष्टं घटनाक्रमं कथयन्ती पुराणग्रन्थावली तु पत्रकारितायाः नूनं मूलरूपाणि भवितुमर्हति। ''महर्षिनारदः पौराणिककाले 'आदिपत्रकारः' इति मन्यते। रामायणे 'सुमुखः' इति गुप्तचरः श्रीरामाय गूढसन्देशान् कथयति। महाभारतेऽपि सञ्जयः

स्वकीयदिव्यदृष्ट्या महाराजधृतराष्ट्रं कुरुक्षेत्रयुद्धस्य प्रत्यक्षवर्णनं श्रावयति। बाणभट्टकृतं 'हर्षचरितम्' इति ग्रन्थे श्रीहर्षस्य अनुजकृष्णेन बाणभट्टस्य कृते पत्रं प्रदत्तं, यस्मिन् मेखलकः नामकदूतः परम्परायाः निर्वाहं कृतवान्।''[१] एवं पत्रकारस्य पत्रकारितायाश्च उद्‌गमस्थलं वैदिकलौकिकयोः द्विविधयुगयोः लभते।

सम्राजः अशोकस्य शिलालेखाः भवन्तु अथवा कालिदासस्य मेघदूतं वा भवतु एवमितिहासविवरणे, घटनाक्रम-निवेदने, राजव्यवहारे, उदन्त-लेखने, प्रेमसन्देशवहने चादिषु कार्येषु संस्कृतसाहित्ये मौखिकदौत्यस्य, लिखितस्य च पत्राचारस्य परम्परा दरीदृश्यते। ''यदा पत्रस्य एकाकी लेखकः, एक एव च ग्राहक-पाठकः भवति तदा व्यक्तिगत-पत्राचारः इत्युच्यते। एकेन लिखितं पत्रं यदा सम्बन्धित-वाचक-समुदायाय उपयुक्तं भवति तदा पारिवारिकपत्राचारः भवेत्। लेखकसमुदायेन लिखितं, मुद्रितं, प्रकाशितं सार्वजनिकं प्रपत्रं वृत्तपत्रमथवा समाचारपत्रमित्युच्यते। एवं व्यक्तिगतं सामूहिकं, राजपत्रं, घोषणापत्रं, भित्तिपत्रं, नियतकालिकवृत्तपत्रम् इति एतादृशः विकासक्रमः वर्तते। सम्प्रति समाचारपत्रेषु -

घटना → वार्ताहरेण ग्रहणम् → चिन्तनम् → उदन्तलेखनम् → सम्पादनम् → मुद्रणम् → प्रकाशनम् → वितरणम् → पाठकप्रतिक्रिया

इत्येतादृशः क्रमः प्रवर्तते।''[२] सम्प्रति विविधासु भाषासु वृत्तपत्राणां, नियतकालिकानां, पत्रकाराणाञ्च संख्या वृद्धिङ्गता दृश्यते। अपि च प्रगतानि विकसितानि मुद्रणतन्त्रसाधनानि तदर्थमुपकारकाणि सन्ति। अद्य तु न केवलं समाचारपत्रेण अपि तु दूरदर्शनादिभिः दृक्श्राव्यमाध्यमैः घटनायाः साक्षात्



सचित्रं दर्शनं, सनिवेदनं सलेखञ्च यथेष्टं भवति। उक्तेयं स्थितिः अद्यतनी वर्तते किन्तु भारते अस्याः पत्रकारितायाः उदयस्तु स्थिरीभूते आङ्ग्लशासनकाले जनप्रबोधनार्थं जातः।

भारतदेशे प्रत्रकारितयाः श्रीगणेशः 'दि बेंगाल गॅझेट्' इति आङ्ग्लपत्रिकायाः प्रकाशनेन अभवत्। भारतीयभाषायाः वृत्तपत्रक्षेत्रे प्रथमवारं पदक्षेपः 'उद्दण्डमार्तण्ड' इति हिन्दीपत्रिकायाः प्रकाशनेनाभवत्। आङ्ग्लभाषायां भारतीय-प्रादेशिकभाषासु च पत्र-पत्रिकाणां प्रकाशनेन सह संस्कृतविद्वांसः वाङ्मयस्य प्रचार-प्रसार-प्रणाल्यः प्रभाविताः अभवन्। तदानीं सत्यपि आङ्ग्लशासनकाले अभिजातरूपेण आख्यातायां संस्कृतभाषायामपि पत्रकारितायाः कश्चन स्फुल्लिङ्गो भविष्यतीति चिन्तितं नासीत् केनापि। परं गच्छता कालेन संस्कृतपत्रकारिता तत्सत्यताम् आपन्नमादौ जनानां पुरस्तादाविरभवत् नियतकालिक-रूपमवधार्य। ''वारणस्याः राजकीय - संस्कृत - महाविद्यालये १ जून १८६६ तमे ख्रिस्तवर्षे 'काशीविद्यासुधानिधिः' इति विश्वस्य प्रप्रथमं संस्कृतनियतकालिकं प्रकाशितम्।''[३] अतः ''जूनमासस्य प्रथमदिनामः संस्कृतपत्रकारितायाः स्थापनादिवसरूपेण संस्कृतज्ञैः संस्कृतपत्रकारैश्च स्मर्तव्यः।''[४] 'आर्षविद्यासुधानिधिः', 'श्रुतिप्रकाशिका', 'आर्यसिद्धान्तः', 'विज्ञानचिन्तामणिः', 'उषा', 'संस्कृतचन्द्रिका', 'सहृदया' च एवं संस्कृत-नियतकालिकानां प्रवासः आरब्धः। एताभिः पत्रिकाभिः नूनं संस्कृत-पत्रकारितायाः कीर्तिः दिक्षु दिक्षु प्रसृता। संस्कृत-पत्रकारितायाः इतिहासे 'संस्कृतचन्द्रिका' त्वनन्यसाधारणं स्थानं भजते। समग्रे भारते संस्कृत-पत्रपत्रिकाणां मुक्तसञ्चारः तदापि असीत् अधुनापि वर्तते। विस्तारभयात् अत्र केवलं महाराष्ट्रप्रदेशस्य संस्कृतनियतकालिकानां विषये विवेचनं क्रियते।

संस्कृतनियतकालिकानां विषये महाराष्ट्रप्रदेशस्तु मूर्धन्यपदं भूषयति। तत्रापि अप्पाशास्त्री राशिवडेकर: नाम संस्कृतपत्रकारिताया: क्षेत्रे आद्य दैवतं महाराष्ट्रस्य कृते। अप्पाशास्त्रि-राशिवडेकरमहोदयस्य अनुपमं संस्कृतपाडित्यं संस्कृतभाषायाम् असाधारणोऽधिकारश्च 'संस्कृतचन्द्रिकाया:' यशोरहस्यम् असाधारणपाण्डित्यस्य प्रचिति: किञ्चित् पठित्वैवायाति। यथा -

'विदितमेवैतत्प्रायेण निखिलानामपि भारतवर्षीयाणां यदासीत्किल कोऽप्यसौ समयो यत्रैतद्भारतमेव वर्षे नि:शेषेऽपि धरातले महनीयमासीद् वैदुष्येण। स्थाने चैतद्। यदा हि सम्प्रति शिखरमिवोपरुढा: वैदेशिका: वर्णिकानुलिप्तविग्रहा: पत्रमात्रपरिधानीया: पशव इव बर्बरा इव वा वनान्तेषु व्यचन्नथवा डार्विनमहाशयस्य मतेन शाखामृगावस्थायामेव बभुवुस्तदापि नवमी भारतवर्षीया मनुजमतिदुरुहानि व्यवारिजुर्नानाविधानि सत्त्वानि। (संस्कृतचन्द्रिका खण्ड: १३ संख्या ७)'[६]

संस्कृतचन्द्रिकाया: प्रकाशनं यद्यपि कोलकत्तात: आसीत् तथापि प्रधानसम्पादकरूपेण अप्पाशास्त्री महोदय: कोल्हापुरं समाश्रित्य संस्कृतचन्द्रिकाया: सम्पादनं निरवहत्। ''संस्कृतचन्द्रिकायाम् अद्वितीयप्रबन्ध-प्रकाशनेन अप्पाशास्त्रि-राशिवडेकर-महाभाग: 'विद्यावाचस्पति' इति उपाधिना गौरवान्वित:। 'भारतरत्न:', 'भारतोपदेशक:', आदिभि: उपाधिभि: विभूषिता: अप्पाशास्त्री 'राशिवडेकर' नाम्ना एव अधिक: प्रसिद्ध: आसीत्।''[७] कालविभाजने पं. बलदेव उपाध्याय: 'आधुनिक संस्कृतसाहित्येतिहास:' इति पुस्तके संस्कृतपत्रकारिताया: त्रिधाकालविभाजनमकुर्वत्। तत्र १८९० त: १९३० वर्षं यावत् अप्पाशास्त्रिराशिवडेकर-युगमिति अमन्यत।[८] अंत: अप्पाशास्त्री महोदयस्तु महाराष्ट्रे संस्कृतपत्रकारिताया: आद्यदैवतं प्रथमपूज्यश्च। अप्पाशास्त्रिण: संस्कृतचन्द्रिकमाध्यमेन सुदूरं कीर्ति: प्रसृता।



वृत्तनिवेदनप्रधानं किञ्चित् साप्ताहिकपत्रं प्रकाशनीयमिति विदग्धै: वाचकै: अप्पाशास्त्री महोदय: सप्रश्रयं प्रार्थित:। अत: संस्कृतपाठकानामिच्छापूर्त्यर्थं २१-११-१९०६ तमे दिने अप्पाशास्त्रिमहोदयेन महाराष्ट्रस्य प्रथमं संस्कृत-साप्ताहिक पत्रं 'सुनृतवादिनी' नाम्ना वाईत: प्रकाशितम्।[९] साप्ताहिकरूपेण कृत: पदन्यासोऽयं संस्कृतपत्रकारिताया: स्पृहणीय: आदर्श: समभवत्। अप्पाशास्त्रिण: स्वायुष: केवलं चत्वारिंशत्तमे वर्षे आगतेन अकालमृत्युना तत्कालीनसंस्कृतपत्रकारितायां तिलकायमानमिदं साप्ताहिकं दुर्दैववशाद् अस्तंगतम्। किन्तु अल्पीयसि वयसि एतावत् श्रेष्ठं कार्यं कृत्वा तु अप्पाशास्त्री राशीवडेकर: चिरंजीवी एवाभूत्। संस्कृतपत्रकारिताया: इतिहास: अप्पाशास्त्रिण: ऋते नैव पूर्णतां याति। अत: पं. वासुदेवशास्त्री औदुंबरकर: स्वीये 'श्री अप्पाशास्त्रिचरितम्' इत्येतस्मिन् ग्रन्थे अप्पाशास्त्रिण: मृत्युविषये लिखति -

''अयम् अप्पाशास्त्रिसंज्ञक: देह: चैतन्येन सुतरां परित्यक्त:। पारावार: पाण्डित्यस्य, प्रतिमूर्ति: प्रतिभाया: निवासभूमि: सौजन्यस्य, तरङ्गिणीपतिस्तेजस्विताया: धरणिधरो धार्मिकताया:, अप्पाशास्त्री राशिवडेकरो भस्मसाद् भूतेऽपि भौतिके देहेऽद्यापि जीवत्येव भारतवर्षे। अद्यापि तस्य रचनाशैली प्रत्यक्षीक्रियते तेषु तेषु मास-पत्र-प्रबन्धेषु। अद्यापि पर: सहस्रा जनास्तं सभक्त्युन्मेषं स्मरन्ति। न खलु स उपरतो यस्य वल्लभो जन: स्मरति।''[१०]

अप्पाशास्त्रिकारणात् अखिल-भारतस्य संस्कृतपत्रकारिता विशेषतया प्रभाविता ईदृशं निर्दुष्टमुत्कृष्टं कार्यमप्पाशास्त्रिण: आसीत्। अप्पाशास्त्रिण: प्रेरणां प्राप्य बहुत्र संस्कृतपत्रकारिताया: दीप: प्रज्वलित:। अत: महाराष्ट्रस्य संस्कृतपत्रकारिताया: विश्वे अप्पाशास्त्रीवर्य: विशेषतया गौरवास्पदं स्थानं भूषयति। किन्तु अप्पाशास्त्रिण: पूर्वमपि महाराष्ट्रे संस्कृत - नियतकालिकानां

संस्कृतपत्रकारितायाः वा परम्परा दरीदृश्यते। अतः महाराष्ट्रस्य संस्कृत-नियतकालिकानां भागद्वये विभाजनं क्रियते।

(अ) स्वातन्त्र्यपूर्व-महाराष्ट्र-संस्कृत-नियतकालिकानि

(ब) स्वातन्त्र्योत्तर - महाराष्ट्र-संस्कृत-नियतकालिकानि

**(अ) स्वातन्त्र्यपूर्व-महाराष्ट्र-संस्कृत-नियतकालिकानि -**

**(१) षड्दर्शनचिन्तनिका** - 'षड्दर्शनचिन्तनिका' पत्रिका पुणेतः १८७७ तमे वर्षे प्रकाशिता। महाराष्ट्रे संस्कृतपत्रकारितायाः श्रीगणेशः अनया पत्रिकया अभवत्। किन्तु पत्रिकैषा संस्कृत-मराठी भाषयोः प्रकाश्यते स्म। ६४१ म्युन्सिपल हाऊस, सदाशिवपेठः, पुणे इति 'षडदर्शनचिन्तनिकायाः कार्यालयस्य समेतः आसीत्। अस्याः पत्रिकायाः वैशिष्ट्यं नाम 'षड्दर्शनचिन्तनिका' पत्रिकायाः प्रचारः पाश्चात्यदेशे अधिकोऽऽसीत्।[११]

**(२) काव्येतिहाससंग्रहः** - सन १८७८ तमे खन्दल-पुणेतः 'काव्येतिहास-संग्रहः' इति मासिकपत्रिकायाः प्रकाशनमारब्धम्। संस्कृत-मराठी भाषयोः पत्रिकेयं प्रकाश्यते स्म। श्री जनार्दनः बालाजी मोडकः महोदयः अस्याः पत्रिकायाः सम्पादकः आसीत्। महाराष्ट्रस्य कवीनां रचनाः मराठ्यनुवादसहितमस्यां पत्रिकायां प्रकाश्यन्ते स्म।[१२]

**(३) काव्यनाटकादर्शः** - धारवाडतः १८८२ तमे ख्रिस्तवर्षे संस्कृतमराठी भाषयोः अपरं मासिकं प्रकाशितम् तन्नाम 'काव्यनाटकादर्शः'। पूर्णतः प्राचीनकाव्यनाटकानामेव प्रकाशनमस्मिन् मासिके भवति स्म।[१३]

**(४) ग्रन्थरत्नमाला** - १८८७ तमे वर्षे मुंबईतः 'ग्रन्थरत्नमाला' इत्येतस्य नियतकालिकस्य प्रकाशनमभवत्। कदाचित् अर्वाचीनग्रन्थानामपि प्रकाशनं ग्रन्थरत्नमालायां भवति स्म।[१४]

**(५) काव्यमाला** - 'काव्यमाला' इति मासिकं मुम्बईतः प्रकाशितम्। पुरातनमासिकस्यास्य प्रकाशनवर्षविषये अनुल्लेखत्वात् अस्य





प्रकाशनवर्षं न उल्लिखितम्। किन्तु ग्रन्थरत्नमाला काव्यमाला च काव्यप्रकाशनाय विशिष्टं स्थानं भजेते।[१५]

**(६) श्री पुष्टिमार्गप्रकाशः** -१८९३ तमे वर्षे मुम्बईतः 'श्रीपुष्टिमार्गप्रकाशः' इत्याख्यस्य मासिकपत्रस्य प्रकाशनं संस्कृत-गुजराती भाषयोः अभवत्। वल्लभसम्प्रदायस्य इदं मासिकपत्रमासीत्।[१६]

**(७) संस्कृत टीचर** - गिरगांव-मुम्बईतः १८९४ तमे वर्षे 'संस्कृत टीचर' इत्याख्यस्य मासिकपत्रस्य संस्कृत- आङ्ग्लभाषयोः प्रकाशनमभवत्।[१७]

**(८) कविः** - १८९५ तमे ख्रिस्ताब्दे पुणेतः 'कविः' इत्येतस्य मासिकस्य प्रकाशनमारब्धम्। अर्वाचीनानां विषयाणामत्र विशेषतया प्रकाशनं भवति स्म।[१८]

**(९) समस्यापूर्तिः** - कोल्हापुरात् १९०० तमे वर्षे 'समस्यापूर्तिः' इति मासिकस्य प्रकाशनमभवत् । अप्पाशास्त्रिराशिवडेकर-महोदयः अस्य सम्पादकः आसीत्। संस्कृत-चन्द्रिकायामस्य सूचना उपलभ्यते। इदं मासिकं पूर्णतः संस्कृतेन प्रकाश्यते स्म।[१९]

**(१०) वीरशैवमतप्रकाशः** - पुणेतः १९०६ तमे वर्षे संस्कृत-मराठी-भाषयोः 'वीरशैवमतप्रकाशः' इति मासिकस्य प्रकाशनमभवत्।[२०]

**(११) गीर्वाणः** - संस्कृतपत्र- पत्रिकाणामधिकतरं प्रकाशनं पश्चिममहाराष्ट्रे भवति स्म। किन्तु महाराष्ट्रे विदर्भजनपदे ततोऽपि नागपुरे संस्कृतपत्रकारितायाः कश्चन स्फुल्लिंगः स्यादिति केनापि न चिन्तितमासीत् । नागपुरस्य भोसला-वेदशास्त्र-संस्कृत-महाविद्यालयस्य संस्कृताध्यापकस्य श्री. त्र्यम्बकशास्त्रि-जोशी महोदयस्य सम्पादकत्वे १९२३ तमे वर्षे नागपुरात् 'गीर्वाणः' इत्याख्यस्य संस्कृतमासिकस्य प्रणयनमभवत् । किन्तु

त्र्यम्बकशास्त्रिणः अकालमृत्युना इसवीये १९२४ तमे वर्षे एव गीर्वाणः अस्तंगतः।[२१]

(१२) **भारतसुधा**- १९३२ तमे वर्षे पुणेतः 'भारतसुधा' इति नाम्ना द्वैमासिकं प्रकाशितम्। पुणेस्थितायाः 'भारतसुधा-संस्कृतपाठशालायाः' अधिकारिभिः पत्रिकेयं प्रकाशिता। महामहोपाध्यायः वासुदेवशास्त्री अभ्यंकरः, वेदान्तवागीशः श्रीधरशास्त्री पाठकः, डॉ. वासुदेवः गोपालः परांजपे, प्रो. शंकरः वामनः दाण्डेकरः, श्री शैलाद्रिः गोविन्दः कानडे , श्री, पुरुषोत्तमः गणेशः शास्त्री इत्येते प्रकाण्डपण्डिताः संस्कृत-विद्वांसः अस्य द्वैमासिकस्य सम्पादनमण्डले आसन्।[२२]

(१३) **मधुरवाणी**- महाराष्ट्रस्य बेळगावात् १९३५ तमे वर्षे 'मधुरवाणी' मासिकपत्रिकायाः प्रकाशनमभवत्। इसवीये १९५५ वर्षतः अस्याः प्रकाशनं गदग- धारवाडतः आरब्धम्। 'अग्रीमः वर्षतः मधुरवाणी पत्रिकेयं साप्ताहिक-पत्रिकारूपेण प्रकाशतां गमिष्यतीति' सूचना पत्रिकायाः द्वादशवर्षे प्राप्यते । द्रव्याभावात् कालान्तरेण 'मधुरवाणी' अनिच्छया अस्तं गता।[२३]

(१४) **मीमांसाप्रकाशः**- १९३६ तमे वर्षे पुणेतः मीमांसासमितिद्वारा 'मीमांसाप्रकाशः इति मासिकं प्रकाशितम्।[२४]

(१५) **भारतीविद्या**- भारतीय-विद्या-भवन-मुम्बईतः १९३८ तमे ख्रिस्तवर्षे 'भारतीविद्या' इति पत्रिका प्रकाशिता। शोधनिबन्ध-प्रधाना इत्यस्याः पत्रिकायाः ख्यातिरासीत्। यथा-'भारती विद्या नाम्नी गवेषणा प्रधाना पत्रिका प्रकाश्यते। भवनेन प्रकाशितायां 'भारतीविद्या' गवेषणाप्रधानपत्रिकायां भारतीयविद्याविषयेषु विद्वत्तापूर्णरचना अतिरिच्य संस्कृतहस्तलिखितग्रन्थानां समालोचनात्मकानि सम्पादनान्यपि प्रकाश्यन्ते।'[२५]



**(आ) स्वातन्त्र्योत्तर-महाराष्ट्र-संस्कृत-नियतकालिकनि -**

(१) **बालसंस्कृतम्** - १९४९ तमे वर्षे मुम्बईतः कविराज-वैद्य-रामस्वरूप-शास्त्रि-आयुर्वेदाचार्यस्य सम्पादकत्वे 'बालसंस्कृतम्' इत्याख्यस्य मासिकपत्रस्य प्रकाशनमभवत्। बालपोयोगि प्रप्रथमं मासिकरूपेण प्रकाशितमित्यस्य मासिकस्य वैशिष्ट्यम् । आगरा रोड, घाटकोपर, मुम्बई-७७ इति बालसंस्कृत-कार्यालयस्य समेतः आसीत्। बालेषु संस्कृतस्य प्रचारेणैव संस्कृतं जनसामान्यानां भाषा भवितुमर्हतीति वैद्य-रामस्वरूप-शास्त्रिणः आसीत् दृढमतम्। अतः 'बालसंस्कृतस्य' भाषा नितान्तसरला, तत्रस्थाः विषयाः अपि सरलाः, तत्रस्थं साहित्यमपि बालोपयोग्यासीत्।[२६]

(२) **भारतवाणी** - पुण्यपत्तनतः (पुणेतः) राहुरकर-पळसुले-झामरे-सहस्रबुद्धे इति सम्पादकानां लेखन्या पल्लविता महाराष्ट्रस्थितानां संस्कृतज्ञानां स्मरणपथि अद्यापि तिष्ठति सा 'भारतवाणी' १९५८ तमे वर्षे प्रकाशिता। डॉ.ग.बा.पळसुले - श्री.वसन्त गाडगीळ इत्यनयोः प्रकाण्डपण्डितयोः सम्पादकत्वे आरम्भे तथा च डॉ. वी जी. राहुरकरमहोदयस्य सम्पादकत्वे दिगन्तं प्राप्तख्यातिः भारतवाणी अधुना मूकीभूता।[२७]

(३) **संस्कृति** - पुण्यपत्तनतः (पुणेतः) १९-११-१९६१ तमे वर्षे विजयः इति नाम्ना दैनिकपत्रस्य प्रकाशनमभवत् । आरम्भे पञ्चदशदिनानि यावत् विजय इति नाम्ना पश्चात् 'संस्कृतिः' नाम्ना अस्य दैनिकपत्रस्य प्रकाशनं पण्डित-बालाचार्य- वरखेडकर महोदयस्य सम्पादकत्वेऽभवत्। महाराष्ट्रस्य प्रसिद्धं दैनिकमिति संस्कृतेः ख्यातिरासीत्। २०८१ बुधवारपेठः, पुणे इति दैनिकस्यास्य प्रकाशनस्थलमासीत्।[२८]

(४) **संस्कृत-दुन्दुभिः** - मराठवाडा-संस्कृत-प्रचार-सभाद्वारा १९८७ तमे वर्षे औरंगाबादतः 'संस्कृत - दुन्दुभिः' इति मासिकस्यशुभारम्भः अभवत्। किन्तु धनाभावात् कालान्तरेणास्य मासिकस्य प्रकाशनं स्थगितम्।[२९]

उपर्युक्तानि संस्कृतनियतकालिकानि महाराष्ट्रस्य गौरवं निश्चप्रचमवर्धयन्। सर्वाणीमानि अमराणि परं मूकीभूतानीति वास्तविकता। पुरा संस्कृतपत्रकारितायाः उद्दिष्टमासीत् संस्कृतवाण्याः समाराधनं गुणगौरवस्तवनञ्च। प्राचीनसूरिभिः प्रयुक्तेयं वाणी यवन-म्लेच्छ-आङ्ग्ल-आक्रमकैः परास्ते भारतभुवि कथं प्रतिष्ठां प्राप्नुयादिति संस्कृतपत्रकाराणां परमं ध्येयमासीत्। अनया अव्यभिचारी-निष्ठया संस्कृतप्रचारव्रतं तैः निभालितम्। तयैव निष्ठ्या तेषां संस्कृतव्रतिनां प्रेरणया तदारभ्य अद्ययावत् कानिचन संस्कृतनियतकालिकानि अद्यापि प्रकाश्यन्ते। कानिचन च विनूतनानि संस्कृतनियतकालिकानि सम्प्रेरणया प्रकाश्यमानानि सन्ति। यथा प्रकाशमानः सूर्यः मनःपटलेषु उत्साहं जनयति, तद्वत् प्रकाश्यमानानि संस्कृतनियतकालिकानि संस्कृतानुरागिणां हृदये संस्कृतविषयकं सकारात्मकभावं प्रपूरयन्ति। विश्वे महाराष्ट्रस्य गरिमाणञ्च वर्धयन्ति। अतः संस्कृतस्य सकारात्मकभावं दृढीकर्तु सम्प्रति विद्यमानानां संस्कृतनियतकालिकानां सुविस्तृतं विवरणम् अग्रे पश्यामः।



## संस्कृत-भवितव्यम्

संस्कृत-भाषा-प्रचारिणी-सभायाः स्थापना प्रबोधिन्यैकादश्यां शके १८७२ अर्थात् २०.११.१९५० मिते ख्रिस्तवर्षेऽभवत्। संस्कृतभाषा मृता भाषा इत्याङ्ग्लशासकानां दुष्प्रचारं दूरीकर्तुं तथा संस्कृतभाषायाः प्रचारप्रसार्थमेव अस्याः संस्थायाः स्थापना अभवत्। अस्याः संस्थायाः प्रप्रथमः कार्यवाहः अभूत् श्री.स.ना.कुळकर्णी महोदयः।

**आरम्भः**- संस्कृत-भाषा-प्रचारिणी-सभायाः स्थापनानन्तरं सभाकार्यालयेऽर्थात् 'हिन्दी-साहित्य-संघः, मोरभवनं, नागपुरम्' इत्यत्र संस्कृतप्रचारप्रसारार्थं संस्कृत-सम्भाषणवर्गाः, बालसाहित्यनिर्मितिः, परीक्षादयः उपक्रमा इमे प्रचलन्ति स्म। तथापि सभासदस्याः असन्तुष्टाः एव आसन्। संस्कृतमधिकाधिकं जन-सामान्यपर्यन्तं कथं गच्छेत्? इत्येतस्मिन् विचारे मग्नाः आसन्। संस्कृतप्रबोधनार्थं संस्कृतं व्यवहार-समर्थं सर्वविचारप्रकाशने क्षमञ्चेति ज्ञापयितुं वृत्तपत्रप्रकाशनमत्यन्तमुपयुक्तमिति सभासदस्यानाम् ऐकमतमभवत्। सर्वेषामैकमतेन २६.२.१९५१ तमे वर्षे सुदिने संस्कृतप्रेमिणामेका गोष्ठी आयोजिता। तस्यां गोष्ठ्यां चैत्र-शुक्ल-प्रतिपदि अर्थात् ७ एप्रिल १९५१ तमे दिने संस्कृत-साप्ताहिकप्रकाशनस्य निर्णयो अभवत्। संस्कृतप्रेमिजनेषु तेषु एकोऽऽसीत् सुख्यातः मराठीसाहित्यिकः तत्त्वज्ञश्च पी.वाय.देशपाण्डे महोदयः। श्री. देशपाण्डे महोदयः 'नवसमाज लिमिटेड' इत्याख्यायाः संस्थायाः सदस्यः आसीत्। नवसमाज लिमिटेड द्वारा पूर्वं 'भवितव्य' इति मराठी-साप्ताहिकं प्रकाशितं भवति स्म। किन्तु कालान्तरेण 'भवितव्य' इति मराठी-साप्ताहिकस्य प्रकाशनं स्थगितम्। तस्य मराठी-भवितव्यस्य यदि संस्कृत-भवितव्ये प्रकाशनं क्रियते तर्हि नवसमाज लिमिटेड संस्कृत-भाषा-प्रचारिणी-सभायै

प्रकाशनायार्थिक-साहाय्यं करिष्यतीति देशपाण्डे महोदयः स्वेच्छां प्राकटयत्। देशपाण्डे महोदस्य प्रस्तावः स्वागतार्हः एवासीत्। तदा संस्कृतपण्डितः डॉ. श्रीधरः भास्करः वर्णेकरः महोदयः 'संस्कृत-भवितव्यस्य' संस्थापकाध्यक्षरूपेण पदम् अलमरोत्।

१९६० ख्रिस्ताब्दपर्यन्तं नागपुरं मध्यप्रदेशे आसीत्। संस्कृतप्रचारझंझावातस्य अपरं नाम डॉ. श्री.भा. वर्णेकरः। डॉ. श्री.भा. वर्णेकरमहोदयस्य प्रथमसम्पादकत्वे ७ एप्रिल १९५१ मिते ख्रिस्तवर्षे स्वतंत्रभारते संस्कृतभाषायाः संस्कृतसाप्ताहिकपत्रं 'संस्कृत-भवितव्यम्' नागपुरे प्रकाशितम्। 'मध्यप्रेदशस्य प्रथमं संस्कृत-साप्ताहिकम्' इति सम्पादकीयलेखेन सह संस्कृत-भवितव्यस्य प्रथमोऽमः प्रकाशितः। अमेऽस्मिन् आद्यसम्पादकेन डॉ. श्री.भा. वर्णेकर- महोदयेन स्पष्टं विशदीकृतं यत् -

''संस्कृतभाषा सर्वेषां भारतीयानां बहुमता भाषा। तस्मात् सर्वेषां यादृशाः विचाराः सन्ति ते तैः संस्कृतभाषायाम् अवश्यं प्रकटीकर्तव्याः इति इयं संस्कृत-भाषा-प्रचारिणी सभा वाञ्छति। यथा प्राचीने काले तपोवनं महर्षेः आश्रमपदं वा सर्वजनसाधारणं भवति स्म एवमेवाधुना संस्कृतभाषाप्रचारिसभायाः इदं संस्कृतनियतकालिकं सर्वजनसाधारणमेव। अत्र सर्वैः संस्कृतभाषा-समुत्कर्षकांक्षिभिः स्वाभिमताः विविधाः विचाराः प्रकटीकर्तव्याः। अनेनैव संस्कृतभाषायाः तन्मार्गेणापि भारतस्य सेवा सम्पादिता भवेत्।''[३०]

संस्कृत-भाषा-प्रचारिणी-सभायाः प्रथमकार्यवाहस्य श्री. स.ना.कुळकर्णी महोदयस्य निधनानन्तरं कार्ये शिथिलता आगता। किन्तु डॉ. भवानीशंकर नियोगी म.म.वा.वि.मिराशी, डॉ. के.रा.जोशी इत्येतैः महाभागैः सभायाः शैथिल्यमपाकृत्य सभायां सकारात्मकः तत्रोत्साहः



प्रपूरितः। तदारभ्य अद्ययावत् सभायाः कार्यं संस्कृत-भवितव्यस्य च प्रकाशनमखण्डितं वर्तते। अद्य ६९ वर्षीयं संस्कृत-भवितव्यं निरन्तरं प्रकाशितं विश्वस्य एकमेवाद्वितीयं संस्कृतसाप्ताहिकमिति संस्कृतस्य कृते अस्माकं कृते चापि गौरवास्पदं वर्तते।

हिन्दी-साहित्य-संघः, मोरभवनं, नागपुरम् इत्यत्र संस्कृत-भवितव्यस्य मुद्रणं भवति स्म। कालान्तरेण श्री. रजनीकान्त-पण्डितमहोदयस्य सभाध्यक्षत्वे श्री. स.ना. कुळकर्णी, डॉ. कळमकर, डॉ. गु.वा. पिंपळापुरे, डॉ. स.मो. अयाचित, श्रीधरशास्त्रिघुशे, श्री. प्र.जै. देव, दं. के. गोसावी, श्री. दा.ब.चाफळे इत्येतेषां प्रभृतीनां महत्प्रयासैः संस्कृतभवनोपरि (सभा-कार्यालयः, पश्चिमोच्चन्यायालयः मार्गः, नागपुरम्) स्वतन्त्रसंस्कृतमुद्रणालयः निर्मितः। १९७४ मिते ख्रिस्तवर्षे संस्कृत-भाषा-प्रचारिणी-सभया मुद्रणयन्त्रं क्रीतम्। किन्तु काश्चन समस्याः अपाकर्तुं तद् यन्त्रं 'मे. उदय आर्ट प्रिन्टर्स' कृते दत्त्वा तस्मात् संस्कृत-भवितव्यस्य मुद्रणं सभया कारितम्। सम्प्रति ऑफसेटमशीनमुद्रणं सभा 'कृष्णचन्द्र एजन्सीज्' द्वारा कारयित्वा संस्कृत-भवितव्यं प्रकाशयति।

**स्वरूपम्** - संस्कृत-भाषा-प्रचारिणी-सभायाः मुखपत्रं 'संस्कृत-भवितव्यमिति' एकं परिपूर्णं साप्ताहिकम्। १९११ तमे वर्षे वाईतः सम्पादितायाः अप्पाशास्त्रि-राशीवडेकर महोदयस्य 'सुनृतवादिन्याः' अनन्तरं महाराष्ट्रस्य गुणवत्तापूर्णं साप्ताहिकं नाम 'संस्कृत-भवितव्यम्' कृष्णधवलवर्णयुतमिदं साप्ताहिकम् अधिकाधिकम् अष्टपृष्ठात्मकं कदाचित् ततोऽपि न्यूनपृष्ठात्मकं विद्यते। संस्कृत-भाषा-प्रचारिणी-सभायाः घोषवाक्ये स्तः। सभायाः मुखपत्रे संस्कृत-भवितव्ये एतयोः घोषवाक्ययोः निश्चितं स्थानं वर्तते। साप्ताहिकस्य प्रथमपृष्ठस्य वामहस्ते उपरिष्टात् मानचित्रेण सह

**'संस्कृतं संस्कृतेर्मूलम्'** इति मुद्राप्यते। साप्ताहिकस्य द्वितीय-पृष्ठस्य वामहस्तोपरिष्टात्।

**तावदेव प्रतिष्ठा स्याद् भारतस्य महीतले।**
**ज्ञानामृतमयी यावत् सेव्यते सुरभारती।।**

इति मुद्राप्यते। अस्मात् साक्षादधः सम्पादकीयमनुवर्तते। वाचकानां मानसिकतां विचिन्त्य संस्कृत-भवितव्ये (१) वार्ता: (२) कथासाहित्यं (३) नाटिका: (४) चरित्रवर्णनम् (५) अनुवाद: (६) लघुकाव्यानि (७) बालसाहित्यं
(८) हास्यालापा: (९) अन्यलेखा: (१०) शब्दरञ्जनी (११) ग्रन्थपरिचय: (१२) वाचकांना मनोगतादीनामन्तर्भाव: कृतोऽस्ति।

**वैशिष्ट्यम्** -

- संस्कृत-भवितव्यमिति साप्ताहिकस्य सरला भाषाशैली।
- संस्कृतं जनसामान्यस्य भाषेति प्रतिपादयितुं दीर्घसंयुक्त-संस्कृतवाक्येभ्य: अप्रचलितशब्देभ्य: संस्कृत-भवितव्यं सर्वथा मुक्तं दृश्यते।
- भारतस्य प्रसिद्धा: संस्कृतविद्वांस संस्कृत-भवितव्ये कृतलेखना: लिख्यमाना: वा दरीदृश्यन्ते।
- केवलं ज्येष्ठांना संस्कृत-विदुषामेव लेखा: संस्कृत-भवितव्ये सान्तीति नापितु संस्कृतच्छात्राणां, संस्कृतेतर-संस्कृत लेखकानां कृतेऽपि संस्कृत-भवितव्ये प्रोत्साहनार्थं सर्वदा अवसर: कल्प्यते। अत: 'संस्कृत-भवितव्यम्' द्वारा संस्कृतस्पर्धा तथा संस्कृतकाव्यरचनास्पर्धा २०१० तमवर्षत: प्रतिवर्षम् आयोज्येते।





- संस्कृत-भवितव्यस्य सम्पादकीयलेखा अद्यापि विशेषतां भजन्ते एव। सम्पादकीयलेखेषु गुणस्तर: विषयवैविध्यं नैरन्तर्यञ्च साप्ताहिकस्यास्य सफलताया: बीजम्। राजकीय-आर्थिक-सामाजिक-राष्ट्रिय-धार्मिक-वैज्ञानिक-तात्कालिकादीनां विविध-विषयाणां समर्पकतया मण्डनमिति विशेषोल्लेखनीयम्।
- अर्थलाभाय संस्कृत-भवितव्ये विज्ञापनान्यपि दीयन्ते। महाराष्ट्रशानस्य विज्ञापनानि, ''अल्पबचत विज्ञापनानि, लॉटरीविज्ञापनान्यादीनाम् अन्तर्भावोऽपि संस्कृत-भवितव्ये अस्ति।
- प्रतिवर्षं द्वौ विशेषामौ सभया प्रकाश्येते। एवमाहत्य १५० अधिका: विशेषामा: प्रकाशिता: संस्कृत-भवितव्यस्य।
- प्राचीनार्वाचीनयो: अभूतपूर्व: सङ्गम: संस्कृत-भवितव्ये वरीवर्तते।
- अन्येषां नियतकालिकानामपेक्षया भवितव्यस्य सम्पादकपरम्परा सुदीर्घा पाण्डित्यपूर्णा च विद्यते।
- निरन्तरं ६९ वर्षेभ्य: प्रकाश्यमति विश्वस्य एकमेवाद्वितीयं संस्कृत-साप्ताहिकं नाम 'संस्कृत-भवितव्यम्'।
- 'विश्वविश्रुतकीर्तय: डॉ.वेंकटराघवन् महोदया: संस्कृत-भवितव्यविषये उचु:-
  "Special mention must be made to the weekly Sanskrit Bhavitavyam which is good in material presented & the style employed."
  [ Modern Sanskrit Literature by Dr. Raghwan in contemporary Indian Literature. Page No. 209] Sahitya Akadami, 1957.]'[३१]

**कार्यक्षेत्रम्** - संस्कृत-भाषा-प्रचारिणी-सभाया: कार्यं विदर्भेऽधिकं दृश्यते। किन्तु सभाया: मुखपत्रस्य 'संस्कृत-भवितव्यस्य' प्रसारस्तु

भारते बहुत्र दृश्यते। विदर्भे महाराष्ट्रे तु प्रसिद्धमिदं संस्कृत-साप्ताहिकं देहली-वाराणसी-पटना-भोपाल-उज्जयिनी-इन्दौर-रायपुरादिषु बहुषु स्थानेषु संस्कृत-भवितव्यस्य प्रसारप्रवासः चल्यमानो वर्तते। पुरा एकदा विदेशेऽपि संस्कृत-भवितव्यस्य प्रवासो भवति स्म।

**साम्प्रतिकी स्थितिः** - ग्राहकत्वशुल्कैः दातॄणां धनदानेन च संस्कृत-भवितव्यमिति साप्ताहिकस्य आर्थिकी स्थितिः तथा सामान्या एव। संस्कृत-भवितव्यस्य वार्षिकं ग्राहकत्वशुल्कं २५०/- रूप्यकाणि विद्यन्ते। सम्प्रति त्रिशताधिका ग्राहकसंख्या वर्तते। संस्कृत-भवितव्यस्य दशाधिकैः विद्वद्वरैः सम्पादकत्वं विभूषितम्।

(१) स्व. डॉ. श्री.भा.वर्णेकर (संस्थापक :-सम्पादकः)

| | |
|---|---|
| (२) स.प. गानु | (९) स.मो. अयाचितः |
| (३) प्रा.दि.वि. वऱ्हाडपाण्डे | (१०) डॉ. पंकज चांदे |
| (४) प्रा. ना.भू. जवादीकर | (११) न.र. पत्तरकीने |
| (५) डॉ. गु.वा.पिंपळापुरे | (१२)डॉ.नी.र.वऱ्हाडपाण्डे |
| (६) स.ना.कुळकर्णी | (१३) डॉ. चन्द्रगुप्तः वर्णेकरः |
| (७) डॉ. के.रा.जोशी | (१४) डॉ. लीना रस्तोगी |
| (८) श्रीधरः घुशे | (१५) डॉ. वीणा गानु |

ईदृशी सुदीर्घा सम्पादक-परम्परा संस्कृत-भवितव्याय लब्धा। कस्यापि संस्कृतवृत्तपत्रस्य एतादृशी पुरातनी प्रदीर्घा च सम्पादक-परम्परा न विद्यते समग्रे भारते। सम्प्रति संस्कृत-भवितव्यस्य सम्पादन-मण्डलस्यकार्यकर्तृगणः अग्रे दीयते -



**सम्पादकमण्डलम्**

| | | | |
|---|---|---|---|
| (१) | प्रधान-सम्पादकः | - | डॉ. लीना रस्तोगी |
| (२) | सम्पादकः | - | डॉ. वीणा गानु |
| (३) | सहसम्पादकः | - | डॉ. शारदा गाडगे,<br>सौ श्रद्धा तेलंग |
| (४) | प्रबन्धकः | - | डॉ. रेणुका करंदीकर |
| (५) | प्रकाशकः | - | डॉ. चन्द्रगुप्तः वर्णेकरः |

सम्पादनमण्डलमिदं 'संस्कृत-भवितव्यं' सर्वदा अग्रणि भवितव्यमेवातः आग्रहि दरीदृश्यते। प्राचीनपरम्परां रक्षन्तः आधुनिकपत्रकारितायाः आधारेणेमे सर्वे संस्कृतविचक्षणाः संस्कृतनियतकालिकक्षेत्रे 'संस्कृत-भवितव्यम्' उद्ग्रीवं पुरस्सरन्तः सन्ति। तदर्थम् अतुलनीयम् अवदानम् अविश्रान्तपरिश्रमाश्च सर्वेषाम् एतेषां सुफलाः जायमानाः दृश्यन्ते तान्त्रिक-समस्यायां सत्यां कदाचित् साप्ताहिकमिदं विलम्बेन कदाचिच्च अमसमुदायेन च अखण्डितं ग्राहकमुपगच्छति। किन्तु एतां समस्याम् अपाकर्तुं सभया ईमेलमाध्यमेन साप्ताहिकं समये सुदूरं सर्वत्र प्रेष्यते।विद्वज्जनमान्यमिदं साप्ताहिकं सरलया संस्कृतभाषया संस्कृतप्रसारार्थं बद्धपरिकरं वर्तत।

# शारदा

महाराष्ट्रस्य संस्कृतनियतकालिकानां हृदयसिंहासने राराजते मोमुद्यते च 'शारदा' संस्कृतपत्रिका। संस्कृतपत्रिकारिताया: विश्वं शारदां विना अपूर्णमेव नेति अतिशयोक्ति:। संस्कृतपत्रकारिताया: मानबिन्दु: नाम पं. वसन्त: अनन्त: गाडगीळमहोदय:। १९६० तमे वर्षे सोमनाथप्राणप्रतिष्ठासमये सोमनाथगर्भगृहे तत्कालीनस्य राष्ट्रपते: डॉ.राजेन्द्रप्रसाद महोदयस्य उपस्थितौ 'संस्कृतायैव जीवनम्' इति कृतप्रतिज्ञ: पं. वसन्त: गाडगीळमहोदय: विगतेभ्य: ६९ वर्षेभ्य: 'संस्कृत-जीवनव्रती' रूपेण स्वजीवनं सार्थकं धन्यं च कुर्वन्नस्ति। केषाञ्चन जन्म विशिष्टकार्यार्थमेव जायते यथा लता मंगेशकर महोदयाया: संगीतार्थं, सचीन-तेंडुलकरमहोदयस्य क्रिकेट-क्रिडार्थं तद्वत् पं.वसन्तराव अ.गाडगीळ महोदयस्य जन्म संस्कृतार्थं संस्कृतपत्रकारिताया: कृते चैवाभवत्। ८८ वर्षीयस्य युवकस्य शरीरे रोमसु धमनिषु रुधिरापेक्षया संस्कृतमेवाधिकं प्रवहति इति साहचर्येण अनुभूतिरायाति। पं.वसन्त-गाडगीळ- महोदयस्य आदर्शरूपेण तिष्ठति संस्कृतपत्रकारिताया: शिरोमणि: श्री. अप्पाशास्त्री राशिवडेकर महाभाग:। राशिवडेकरमहोदयस्य संस्कृतकार्यधुरम् अग्रे नेतुं १४.११.१९५८ तमे दिने पं.नेहरु- जन्मदिने, त्रिपुरारि पौर्णिमाया: मुहूर्ते 'शारदा' इति पाक्षिकी संस्कृतपत्रिका पं.वसन्त-गाडगीळ महोदयस्य सम्पादकत्वे महदोत्साहेन आरब्धा। शारदापत्रिकाया: पञ्जीयन- क्रमाम: १४५ लायसेन्स क्रमाम: ४४ इति वर्तते। शारदेति संस्कृतपाक्षिकस्य 'यशवन्त मुद्रणालय:' १८३५ सदाशिवपेठ:, पुणे-३० इति मुद्रणस्थलम् अपि च श्री.ल.म.चक्रदेव, ३१८, राममोहनमार्ग:, मुम्बई-४ इति प्रकाशनस्थलमस्ति।



**उद्दिष्टम् -**

(१) संस्कृतपत्र-युगप्रवर्तकस्य श्री. अप्पाशास्त्रि-राशिवडेकर-महाभागस्य संस्कृतपत्रकारिताया: कार्यं यथाशक्ति समुन्नेतुं 'शारदा' इति पाक्षिकी-संस्कृतपत्रिकाया: प्रथमम् उद्दिष्टम् ।

(२) शारदाकार: पं.वसन्त: गाडगीळ: महोदयो नाम संस्कृतस्य संस्कृतपत्रकारितायाश्च जाज्वल्यमानस्य संस्कृताभिमानस्य मूर्ति: एव। संस्कृतस्य, संस्कृतसाहित्यस्य च प्रसार: प्रकाशनं च इति मुख्योद्दिष्टम्। विश्वे प्रचलितस्य कस्यापि विषयप्रतिपादनस्य सामर्थ्यं संस्कृते निश्चप्रचं विद्यत इति साभिमानं निवेदयितुं 'शारदा' संस्कृतक्षेत्रे आविरभवत्।

(३) न केवलं शारदेति संस्कृतपत्रिकासञ्चालनमेव अपि तु विपत्प्रसंगे शारदेतराणां संस्कृतपत्रिकाणां कृते यथाशक्ति अधिकाधिकं साहाय्यदानमिति उदात्तम् उद्दिष्टं वर्तते 'शारदा' प्रणयनस्य। ईदृगुदात्तमुद्दिष्टं प्राय: नान्यत्र दृष्टिपथम् आयाति। 'समृद्धं संस्कृत-पत्रिका-विश्वम्' इति शारदाया: सम्पादकीये स्पष्टोक्तमेव - ''सुधर्मा, अजस्रा, सर्वगन्धा, संस्कृताऽमृतम्, गाण्डीवम्, सुप्रभातम्, इ. एतेषां सर्वेषां पत्राणां (नैकेषाम् अनुल्लिखितानाम् अपि) साहसावतरेण दर्शनेन चण्डपराक्रमेण च 'शारदा' नन्दति नन्दति नन्दत्येव। सादरं सहर्षं साभिमानं स्वागतम् एताभ्य: सर्वाभ्य:। पत्रिका-मतल्लिकाभ्य: अग्रत: सरतु सर्वा: सधैर्यम्। यदि कस्मिन् अपि क्षणे य: क: अपि विघ्न: अन्तराय: बाध: वा भीषयेत् प्रकाशनं तर्हि 'शारदा' यथाशक्ति तत्र सेवा सहकायार्थं सर्वस्वार्पण-धिया धावन्ती समुपस्थास्यति। सविनयादरम् इदं प्राकट्येन सम्पादकीयं विनिवेदनम्। संस्कृत-पत्रिका-विश्व-प्रतिष्ठा-वर्धनम्

एव आस्माकीनं जीवनकार्यम्। केवलं 'शारदा' प्रकाश-सञ्चालनमात्रम् अस्मदीयम् उद्दिष्टम् नासीत् नास्ति च।''[३२] सम्पादकीययादस्मात् शारदाया: भूमिका स्पष्टतया ज्ञायते।

**स्वरूपम्** - 'शारदा' इति पाक्षिकं संस्कृत नियतकालिकमस्ति। कालानुरूपं शारदाया: स्वरूपं परिवर्त्यते। शारदाया: सचित्रं बहिरङ्गमन्तरङ्गं च नित्यं सर्वजनमोदकरम् एव दृश्यते। भाषाविषये उच्यते चेत् वक्तुं शक्यते यत् शारदाया: भाषा सुबोधा, प्रासादिका माधुर्यगुणोपेता च प्रतिभाति। शारदाया: भूषणास्पदं वैश्विकं रूपं नाम 'शारदा' संस्कृत-पत्रिका ५ एप्रिल २००० इति शुभदिनात् आन्तरजालवृत्तित्वेन प्रतिमासं प्रकाशिता भवति। www.esharada.com समेतस्थले उपलब्धा वर्तते।

''विश्वप्रिया विश्वमनोनुकूला 'शारदा' संस्कृतपत्रिका (शुभारम्भ: १४ नोव्हेंबर १९५९) स्वायुष: पञ्चमे दशकारम्भवर्षे (४१) यागादि-शुभ-दिने (५ एप्रिल २०००) आन्तरजालवृत्तित्वेन (Internet Edition) प्रतिमासं प्रकाशिता भवेत्। तत्र (१) सांप्रतिक-विषये सम्पादकीयम्, (२) वदत/लिखत/ पठत संस्कृतम्, (३) संस्कृतम् अद्य, भूते भविष्ये च, (४) विश्ववार्ता:, (५) ऋतुचर्या, (६) पत्र-रत्न-मञ्जूषा, (७) शिशु-भारती, (८) रमा-राज्यम्, (९) भारतीया: वैदेशिकाश्च सुरभारती-तपस्विन:, (१०) अपूर्व: कोऽपि कोशोऽयम् ... इत्यादि-विविध-शीर्षकामितं वाङ्मयं प्रकाशयिष्यते।''[३३]

शारदाया: सर्वविषयस्पर्शि अन्तरङ्गं वाचकानां मन: आकर्षति। शारदाया: वार्षिकं मूल्यं शारदारम्भे १० रूप्यकाणि आसन्। कालानुरूपं तत्र परिवर्तनं भूत्वा सम्प्रति २००/- रूप्यकाणि वार्षिकं मूल्यं वर्तते शारदाया:।



**वैशिष्ट्यम्** - शारदेति संस्कृतपत्रिका नूनं वैशिष्ट्यपूर्णा एव। महाराष्ट्रे विद्यमानानाम् अन्यासां संस्कृतपत्रिकाणाम् अपेक्षाया शारदा निजवैशिष्ट्यम् अधिकं ख्यापयन्ती दृश्यते।

- युगादि-दिने चैत्रे प्रतिपत्तिथौ (५ एप्रिल २०००) 'आन्तरजाल-शारदा' संस्कृत-पत्रस्य शुभारम्भो जात:। अखिल-भारतीय-संस्कृत-पत्रकारसङ्घस्य संस्थापकेन शारदाकारेण पं.वसन्त-गाडगीळ महोदयेन सततं नव-नवीन-प्रयोगशीलेन स्वायुष: पश्चिमे वयसि अभूतपूर्वं संस्कृत-पत्रिका-विश्वे संस्कृत-वैभव-वर्धकम् इदं नूतनं साहसम् अनुष्ठीतम्। महाराष्ट्रस्य एषा प्रथमा पत्रिका वर्तते या आन्तरजाले प्रकाशिता भवति।
- सुख्यातानां संस्कृतविबुधानां शारदायां उत्तमोत्तमलेखा: प्राय: प्रकाश्यन्ते। यथा - डॉ. ग.बा.पळसुले, डॉ. प.ल.वैद्य:, प्रज्ञाभारती श्री. भा.वर्णेकर:, पं. भी.त्र्यं. केण्ढे, डॉ. त्रि.ना.धर्माधिकारी, पं.फलटणकरशास्त्री, विद्वान् बालगणपतिभट्ट: ईदृशा: नैके संस्कृत-विद्वद्वरा: शारदायां वाङ्मयसेवां दत्त्वा स्वलेखनीं धन्यां कृतवन्त: कुर्वन्ति च।
- शारदाया: भाषाशैली उत्तमा एवास्ति किन्तु प्रत्येकं किमपि नूतनं दातुं 'शारदा' सर्वदा प्रयत्नरता दृश्यते। तथापि शारदाङ्कान् परिशील्य एक: समानबिन्दु: आरम्भकालत: अद्ययावत् प्रतिबिम्बितो भवति तन्नाम संस्कृतस्य राष्ट्रस्य च आत्यन्तिकोऽभिमान:। संस्कृतविषयक: अभिमान: स्नेहादरश्च पदे पदे दृश्यते शारदाङ्केषु।
- 'सुरस सुबोधा विश्वमनोज्ञा ललिता हृद्या रमणीया ....'[३४] इति शारदाकारस्य पं.वसन्तगाडगीळमहोदस्य विश्वप्रसिद्धं गीतमिदं संस्कृतविषयिकीं प्रीतिं स्वयमेव प्रकटयति। यथा संस्कृतस्यविषये

आत्मीयता पदे पदे अनुभूयते तद्वत् प्रखरराष्ट्राभिमानस्य स्थाने स्थाने अमेषु प्रचितिरायाति।

‘‘राष्ट्रियतान्दोलन - झञ्झावातेन प्रक्षुब्धे संस्कृत-पत्रकारिता - सागरे पं. राशिवडेकर अप्पाशास्त्रिभिः प्रज्वालितः मातृभू - भक्ति - स्वरूपः राष्ट्रियतायाः प्रेरकः नन्दादीपः तेषु त्र्यशीतिवर्षपूर्वमेव (१९१३) ग्रन्थि-ज्वरेण (प्लेग) पुण्यश्लोकतां प्राप्तेष्वपि अद्यावधि प्रज्ञाभारती डॉ.श्री.भा.वर्णेकर - ‘शारदा’कार - डॉ. रमाकान्त शुक्ल-अभिराजराजेन्द्र - सदृशैः सश्रद्धं साग्रहं च नैरन्तर्येण प्रकाशितः सतेजस्वितां सुसंरक्षितः विजयतेतमाम्। अतः संस्कृत-पत्रकारितायाः गतेषु सपाद-शत-वर्षेषु राष्ट्रभावना ओतं च प्रोतं च परिपूर्णतया वर्धिष्णुतां गच्छन्ती साक्षात्क्रियते इति सम्यग् अवधार्य सर्वैः संस्कृत-पत्रकारैरपि ‘राष्ट्र देवो भव’ इति मन्त्रः स्वप्नेऽपि न विस्मर्तव्यः परं प्रातः स्मरणीयत्वेन सदैव निदिध्यासितव्यः व्यवहार-दशायां च अवतारणीयः इति सादरं साग्रहं च सम्प्रार्थ्य विरमते।’’[३५]

- सम्पादकीयस्य शारदाकारस्य अभीरु-सटीकं लेखनम्, आकर्षकं शीर्षकं चेति शारदायाः अपरं वैशिष्ट्यम्। अर्थात् पारदर्शिकतया निष्पक्षपातेन स्पष्टमतप्रतिपादनार्थं शारदा तु सुख्याता वर्तते। नैकेषु सम्पादकीयेषु शारदायाः अभीरुवचांसि पठितुं शक्यन्ते। संस्कृत-पत्रकारितायाः विश्वे ईदृशी प्रखरसंस्कृतपत्रकारिता विरलतयैव अन्यत्र द्रष्टुं शक्यते। ईदृशं वैशिष्ट्यं प्रायः अन्यस्य संस्कृत-नियतकालिकस्य न दृश्यते। अतः शारदा एकाएव अद्वितीया वर्तते।
- शारदायाः वैशिष्ट्येषु अन्यतमं वैशिष्ट्यं नाम शारदायाः विशेषाङ्काः। विशेषतया विशेषाङ्कानां विषये विवक्ष्यते यत्





शारदायाः विशेषाङ्काः विशिष्टे एव काले प्रकाश्यन्ते इति नास्ति उत यतः उत्कृष्टं योग्यं विशिष्टं चानुभूयते तदा तदा शारदायाः विशेषाङ्काः आविर्भवन्ति। १९७० तमवर्षस्य २३२ पृष्ठात्मकः विवेकानन्द-विशेषाङ्को विशेषोल्लेखनीयः। संस्कृतनियतकालिकेषु एतावद् बृहद् विशेषाङ्कः अन्यत्र अन्यथा अपि द्रष्टुं न शक्नुमः। १९७९ तमवर्षस्य विश्व-संस्कृत-प्रतिष्ठान-विशेषाङ्कः, १९८२ तमवर्षस्य श्रीद्वारका-पट्टाभिषेक-महोत्सव-विशेषाङ्कः, २००० तमसंवत्सरस्य डॉ.ग.बा.पळसुले-गौरव विशेषाङ्कः, दीपावली-विशेषाङ्काः ईदृशाः नैके अनुल्लिखिताः विशेषाङ्काः वाचकानां हृदयमण्डले अधिराजन्ते।

- वैशिष्ट्यपूर्णायाः शारदायाः महदवदानं नाम आकाशवाण्यां संस्कृतवार्ताप्रसारणार्थं शारदया भूरि प्रयत्नाः कृताः।
- संस्कृत-सम्मेलनेषु ‘शारदा’ सातत्येन दैनिकाङ्कान् प्रकाशयति इति शारदायाः अत्यन्तं स्तुत्यं प्रशंसनीयं कार्यम्। समग्रे भारते संस्कृत-सम्मेलनेषु दैनिकं प्रकाशयन्ती ‘शारदा’ स्वकीयम् अनन्यतमं महत्त्वं ख्यापयति।
- शारदायां प्रकाशितानि विज्ञापनानि नूनं किमपि नूतनं पाठयन्ति। शारदायाः आरम्भकालादेव शारदायां सर्वाणि विज्ञापनानि संस्कृते अनूद्य प्रकाश्यन्ते। विज्ञापनं वित्तकोषस्य भवतु औद्योगिकं, सामाजिकं, शासकीयं वा भवतु संस्कृतविज्ञापनं तत् पाठकाः निश्चप्रचं आनन्देन आस्वादयन्ति केचन च संग्रहणमपि कुर्वन्ति।
- शारदायाः नियमितता, आरम्भकालादेव च सचित्रवार्तादानम् इति कष्टकरं कार्यं तु शारदायाः परिचयः एव। दुर्लभातिदुर्लभानां चित्राणां दर्शनं शारदायां नित्यं भवति। तत्रापि उल्लेखनीयौ अङ्कौ नाम २०१२ तमवर्षस्य ८-९ अङ्कौ।

**शारदायाः वैशिष्ट्यपूर्णाः उपक्रमाः** – शृङ्गेरी-शारदा-पीठेन, भारत-शासनेन च पुरस्कृता विश्वप्रिया 'शारदा' संस्कृत-पत्रिका स्वकीय-वैशिष्ट्यपूर्णोपक्रमैरपि सुख्याता वर्तते। शारदा उपक्रमान् शारदा-ज्ञान-पीठम् इति नाम्ना सञ्चालयति।

(१) पुण्यपत्तनस्थे श्रीमन्त-दगडूशेठ-गणपतिमन्दिरे १९६७ तमे वर्षे गणेशोत्सवे १० दिनानि यावत् उपशतच्छात्रान् प्रातः पञ्चवादनात् पूर्वं मन्दिरमण्डपम् आनीय शारदाकार-वसन्त-गाडगीळ महोदयेन अथर्वशीर्षस्तोत्र-पाठनस्योपक्रमः आरब्धः। गाडगीळमहोदयस्य प्रयत्नपराकाष्ठया अधुना अत्र देश-विदेशतः लक्षशः जनाः अथर्वशीर्षस्तोत्रपठनार्थं सहभागिनः भवन्ति। संस्कृतव्रती कश्चन किं किं साधयितुं न शक्नोति इत्येतस्य जीवितमुदाहरणं नाम शारदाकारः पं. वसन्त-गाडगीळमहोदयः।

(२) शारदा-ज्ञान-पीठस्य वर्धापन-महोत्सवे गतेभ्यः ३८ वर्षेभ्यः (१९७६तः२०१३ पर्यन्तम्) पुणे महानगरपालिका, सकाळ, केसरी, लोकसत्ता, महाराष्ट्र टाइम्स, सामना, बँक ऑफ महाराष्ट्र, इस्कॉन, लिज्जत पापड, कैलासजीवन, पुणे जिल्हा मुद्रक सङ्घ आदिभिः ३८ संस्थाभिः मिलित्वा 'ऋषि-तपस्या पूजनम्' इति स्तुत्योप्रकमं शारदा स्वनैतृत्वे प्रतिवर्षं साफल्येन समायोजयति। विभिन्नक्षेत्रीयाणां ज्ञान-वयस्-तपोवृद्धानां राष्ट्र-सेवकानां पूजनम् अर्थात् सत्कारः शारदा-ज्ञान-पीठस्य वर्धापन-महोत्सवे क्रियते। प्रायः वयसः ८० वर्षपर्यन्तं वा ततोऽपि उपरि स्वक्षेत्रसेवायां रतानां ऋषितुल्य-तपस्विनामेव अयं सन्मान-समारोहो वर्तते। एतावत् पर्यन्तम् उपचतुश्शतं ऋषितुल्यानां सन्माननीयानां तपस्विनाम् अद्ययावत् शारदा-ज्ञान-पीठमहोत्सवे पूजनमभवत्।



(३) १९७६ तमे वर्षे स्थापित-शारदा-ज्ञान-पीठद्वारा संस्कृत-शिशुशाला, संस्कारवर्गः, देशीयानां विदेशीयानां कृते व्यावहारिकं संस्कृतपाठनं, मराठी-संस्कृतं, कन्नड-संस्कृतं, बंगाली-संस्कृतं, गुर्जरी-संस्कृतम् इदृशाः प्रशंसनीयाः प्रकल्पाः सफलतया आरब्धाः नैके पूर्णताम् अपि नीताः।

(४) अर्वाचीन-संस्कृत-साहित्यप्रकाशने अतुल्यम् अवदानं नाम 'शारदा-गौरव-ग्रन्थ-माला' इति। शारदा-ज्ञान-पीठद्वारा शारदा-गौरव-ग्रन्थमाला इति स्तुत्योपक्रमे ९१ संस्कृतग्रन्थानां प्रकाशनम् अभवत्।

**साम्प्रतिकी स्थितिः** – महाराष्ट्रस्य संस्कृत-नियतकालिकेषु सर्वोत्तमा स्थितिः यस्य वर्तते तस्य नाम 'शारदा' इति अस्ति। शारदायाः आर्थिकी स्थितिरपि उत्तमा यतोहि दातारः धनाढ्याः। शारदाकार- पं. वसन्त-गाडगीळ महोदयस्य सङ्घटनकौशलम् अत्युत्तमो वर्तते अतः त्रिषु कालेषु (भूत-वर्त-भविष्य) शारदा उद्ग्रीवा तिष्ठन्ती दृश्यते। महाराष्ट्रस्य संस्कृत-नियतकालिकेषु सर्वाधिक-ग्राहकसंख्या शारदायाः एवास्ति। भारतस्य कोणे कोणे विहारं कुर्वती शारदा विदेशेऽपि सहजं सञ्चरति। सहस्राधिकाः भारते उपद्विशतं विदेशे च शारदा-पाठकाः विलसन्ति। तत्रापि साभिमानं प्रतिपाद्यते यत् गानसम्राज्ञी लता मंगेशकरमहोदया अपि शारदायाः ग्राहकावलीषु अन्यतमा वरीवर्तते। 'चिरं जीयात् लतादेवी नादब्रह्मपरायणा' इति शारदायाः सम्पादकीये तस्य स्पष्टोल्लेखो वर्तते।

''स्वरसम्राज्ञी, विश्वमोहिनी, गानकोकिला लता मंगेशकर 'शारदा' ग्राहक- नामावलीमध्ये 'शारदा' भक्तोत्तमत्वेन विराजते इति मधु-मधुरां वार्तां ज्ञात्वा एव सर्वे शारदोपसकाः साभिमानं, सप्रमोदं प्रफुल्लिताः स्युः। गतान्तरिते वर्षे मुम्बापुरीतः पापसन्देशैः 'शारदा'कारैः संस्कृताभ्यासोत्सुकायै लतायै

प्रेषिताः तत्प्रार्थिताः शारदाङ्काः। तदनु स्वयं मुम्बापुरीं गत्वा साक्षात्कृता सा विश्वकोकिला, महालक्ष्मी परिसरे, सागरतीरे, प्रभुकुञ्जे प्रभुं श्रीकृष्णम् आराधयन्ती।''[३६]

संस्कृतव्रती शारदाकारः पं.वसन्त गाडगीळमहोदयः संस्कृतकार्यार्थं बहुभिः पुरस्कारैः सन्मानीतो वर्तते। अखिल भारतीय-पण्डित-परिषद्, वाराणसीद्वारा संस्कृतरत्नाकर-पुरस्कारः (१९८४), भारत-शासनस्य पुरस्कारः (२००१), महाराष्ट्रशासनस्य कालिदास-संस्कृत-साधना-पुरस्कारः (२००३), कविकुलगुरु-कालिदास-संस्कृत-विश्वविद्यालयद्वारा 'पत्रविद्यारत्न' इति उपाधिना गौरवान्वितः प्रकाण्डपण्डितः वसन्तः गाडगीळमहोदयस्तु न केवलं महाराष्ट्रस्य अपि तु भारतवर्षस्य गौरवम् एव। किम्बहुना पं. वसन्त गाडगीळ महोदयः बहुभिः पुरस्कारैः सन्मानीत इत्येतस्य अपेक्षया पं. वसन्त गाडगीळमहोदयाय पुरस्कारं दत्त्वा पुरस्कारस्यैव सन्मानः वर्धते इति कथनम् उचितं भवेत्। 'शारदा' संस्कृतपत्रिकायाः विषये पं. वसन्त गाडगीळमहोदयस्य विषये च पृथक्तया वक्तुं न शक्यते। यतो हि द्वावपि अद्वैतभावेन विराजेते। तथापि शारदायाः सम्पादकमण्डलम् अस्ति, यस्मिन् विश्वख्याताः सुपरिचिताश्च संस्कृतविबुधाः शारदीयं कार्यम् उन्नेतुं कटिबद्धाः सन्ति। साम्प्रतिकं शारदायाः सम्पादकमण्डलम् अग्रे दीयते।

**सम्पादकमण्डलम्**

संस्थापकः, सम्पादकः - पं.वसन्तः गाडगीळः
मुद्रकः, प्रकाशकः
अध्यक्षः - पद्मश्री डॉ. विजयः भटकरः
(विश्वविख्यातः परमसङ्गणकस्य जनकः)





कार्याध्यक्षः - श्री राहुलः वि. कराडः
सचिवः - डॉ. भाग्यलता पाटस्कर
(वैदिक-संशोधन-मण्डलं, पुणे)
प्रबन्ध-सम्पादकः - श्री. वासुदेवः डोंगरे

एवं व्युत्पन्नमतीनां विद्वद्वराणां समवायेन 'शारदा' सुसमृद्धा भूत्वा यशोशिखरम् आरोहन्ती दृश्यते। सर्वेऽपि इमे संस्कृतप्रचारार्थं क्रियाशीलाः। पं.वसन्त गाडगीळमहोदयस्य पाण्डित्यप्रभुत्वेन 'शारदा' संस्कृतपत्रिका सर्वाङ्गसुन्दरी परिपूर्णा च भासते। विषयवैविध्यं, भाषाप्रभुत्वम् अविरतः कार्योत्साहः, संस्कृतोपक्रमाः, सुस्पष्टता सर्वेषु च एतेषु नियमितता शारदां सर्वोच्चस्थाने निश्चप्रचम् उपाविशति। सर्वेषु च संस्कृत-सम्मेलनेषु दैनिकं प्रकाश्य शारदा स्वीयम् इतरेभ्यः भिन्नत्वं व्याख्याति। संस्कृतोपक्रमान् सञ्चाल्य संस्कृतेतराणाम् अपि सङ्घटनमिति अद्वितीयं कार्यं कृत्वा शारदा आदर्शं प्रस्थापयति। बलियस्या इच्छाशक्त्या संकृत-समर्पणेन च अखिलं विश्वमपि पादाक्रान्तं कर्तुं शक्नोतीति शारदा सर्वान् पाठयति। महाराष्ट्रस्य मुकुटायमानं नियतकालिकं नाम शारदेति सानन्दं प्रतिपादयितुं शक्यते।

# संस्कृत-बालसंवादः

महाराष्ट्रस्य एकमेवाद्वितीयं मासिकं केवलं बालानां कृते, तन्नाम 'संस्कृत बालसंवादः'। 'संस्कृत-बालसंवादः' महाराष्ट्रस्य दापोली-रत्नागिरितः प्रकाश्यते। न केवलं भारतेऽपि तु विदेशं यावदस्य मासिकस्य संवादप्रवासो भवति। ईदृगुत्तमं मासिकं महाराष्ट्रात् प्रकाश्यते इति नूनं भूषणास्पदम्। मासिकस्यास्य जन्मकथा महती सुरुचिरा प्रेरणादायिनी च वर्तते।

मूलतः कृषिवलः किन्तु कविकुलगुरोः कालिदासवाङ्मयस्य परमभक्तः श्री.माधवः बडे महोदयः अत्यन्तं संस्कृतानुरागी। सुरभारती आपटे स्मारक-समितिद्वारा १९९६ तमे वर्षे मुंबई-नगरे आयोजिते शिबिरे संस्कृतभाषायाः व्याख्यानानि श्रुत्वा संस्कृत-विवक्षा माधवमहोदस्य मनसि समुत्पन्ना । संस्कृतात् महतीं प्रेरणां सम्प्राप्य दापोलीस्थैः संस्कृतः शिक्षकैः सह मिलित्वा अचिरादेव माधवमहोदयः तत्रैव एकं शिबिरम् आयोजयत्। तस्मिन् शिबिरे वैदिक-गणित-खगोलशास्त्र-संस्कृत-सम्भाषणादीनां नैकेषां विषयाणां समावेशोऽऽसीत्। विषयान्नैतान् प्रतिपादयितुं पुण्यपत्तनतः (पुणेतः) व्याख्यातारः आहूताः आसन्। दापोलीजनानां पठनासक्तिं दृष्ट्वा काचित् शिक्षिका पुणेतः प्रतिमासं संस्कृतं पाठयितुमागच्छति स्म। सर्वेऽपि उत्तमतया सहभागिनो भूत्वा पठन्ति स्म। कालान्तरेण शिक्षिकायाः प्रतिमासं दापोल्यागमनं दुष्करमभवदतः सः मासिकवर्गः खण्डितः अभवत्। किन्तु तस्मिन्नेव कालावधौ संस्कृतभारत्याः प्रशिक्षणशिबिरस्य विषये श्रुत्वा माधवबडेमहोदयः शिबिरार्थं बारामतिं गतवान्। संस्कृतभारत्याः तद् शिबिरं माधवबडे महोदयस्य जीवनध्येयं निश्चेतुं पर्याप्तमासीत्। बारामतौ एव



माधवमहोदये संस्कृतप्रचारझञ्झावातस्य सञ्चारोऽभवत्। ततः दापोलीमागत्य माधवमहोदयः संस्कृत-जनान्दोलनम् आरब्धवान्। बाल्यकालादेव यदि बालानां कृते संस्कृतं पाठ्यते तर्हि कालान्तरेण कालिदास्य निर्मितिः भवितुं शक्या इति कालिदासवाङ्मयस्य परमभक्तः माधवबडेमहोदयः अचिन्तयत्। अतः कालिदासनिर्माणार्थं बालानां कृते तेषां बाल्यकालादेव संस्कृतसंस्काराः आवश्यकाः तदर्थं माधवमहोदयः प्रतिविद्यालयं गत्वा प्रथमकक्षातः चतुर्थकक्षापर्यन्तं संस्कृतभारत्याः 'अभ्यासपुस्तकम्' इति पुस्तकस्य आधारेणैव विनाशुल्कं विशेषतासिकां स्वीकृत्य पाठयति स्म। नित्यनूतनः प्रयोगशीलः बडेमहोदयः छात्राणाम् अपेक्षाः पूरयितुं प्रायतत। तदा मा. चमूकृष्णशास्त्रि - महोदयस्य मार्गदर्शनेन बालानां कृते एकं मासिकं प्रकाशनीयमिति प्रेरणा माधवमहोदयेन प्राप्ता।

समग्रे महाराष्ट्रे बालानां कृते विशेषतया एकमपि नियतकालिकं सम्प्रति नैव वर्तते। अतः लाभहानयोः चिन्तामकृत्वा 'संस्कृत-बालसंवादः' इति मासिकस्य उदयः जून २००३ तमे वर्षेऽभवत्। अस्य मासिकस्य घोषवाक्यमस्ति-

**' क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे'**

माधवबडे-महोदयस्य दृढनिश्चयः घोषवाक्यादेव प्रतीयते। माधवबडे-महोदयस्य मुख्यसम्पादकत्वे केषाञ्चन संस्कृतानुरागिणां साहाय्येन जून २००३ मध्ये प्रप्रथमं 'संस्कृत-बालसंवादः' इति मासिकं सोत्साहं प्रकाशितम्। पूर्वं दापोली-रत्नागिरियावत् मासिकस्य प्रसारः आसीत्। संस्कृत-बालसंवादस्य सरला सुगमा संस्कृतभाषा जनान् आकृष्टवती। परिणामतः ग्राहकसंख्या वृद्धिं गता। अतः बडे महोदयेन २००४ तमे वर्षे संस्कृत-बालसंवादस्य अखिल-भारतीय-संस्कृत-पत्रकार- सङ्घे पञ्जीयनं कृतम्। २००५/१६६७८ इति अस्य पञ्जीयनक्रमामः।

**उद्दिष्टम्** –

(१) संस्कृतं सरलमस्ति इति प्रतिपादयितुम्।

(२) संस्कृतेतर: जनोऽपि संस्कृतं जानातु पठतु च।

(३) वयसा बालानां कृते तथैव नूतनतया संस्कृतप्रविष्टाणां कृते संस्कृतं सहजगम्यं भवत्वत: संस्कृत-प्रचार-प्रसारार्थं संस्कृत-बालसंवादस्य निर्मिति:। तथैव 'संस्कृत-बालसंवाद:' मासिकस्य संस्थापक: संपादक: प्रकाशकश्च श्री. माधव: बडेमहोदय: सरलेन संस्कृतेन स्वेच्छां मुख्योद्देश्यञ्च मासिकेऽस्मिन् स्पष्टतया प्रतिपादयति।

''मासेऽस्मिन् कालिदासदिनं मेघदूतस्मरणेन आचर्यते। तदानीं कालिदासप्रशंसां कुर्म:। किन्तु केवलं पूर्वजानां स्मरणं न पर्याप्तमिति मन्ये। सद्य: अपि कालिदास: इव लिखन्त: संस्कृतलेखक: सर्वत्र अस्मान् परित: भवेयु: इति अस्माकं महत्त्वेच्छा।

या भाषा जिल्हायां भवति तया भाषया स्वविचारान् स्वाभिप्रायं च प्रकटीकर्तुं सहजता भवति। संस्कृत-सम्भाषणपठनात् सम्भाषणशीलत्वाच्च यथोचितं संस्कृतभाषाप्रवेश: सुकर: भवति, इति सर्वत्र अनुभूयते। बालसंवाद-पत्रिकाद्वारा संस्कृतवाचनावसर: कल्पित: अस्ति। प्रतिमासं न्यूनातिन्यूनं किञ्चित् बहुविधं वाचनं भवेत्। तस्मात् संस्कृताध्ययने रुचि: वर्धेत, प्रेरणा च भवेत् इत्येव बालसंवादस्य चिन्तनम्।''[३७]

**स्वरूपम्** – 'संस्कृत-बालसंवाद:' इति बालान् उद्दिश्य निर्मितं संस्कृतमासिकं वर्तते। कृष्णधवलवर्णयुतस्य अस्य मासिकस्य आकार: नातिबृहद् विद्यते। कदाचित् चतुर्पर्णात्मकं कदाचिच्च षड्पृष्ठात्मकमिदं संस्कृतमासिकं सचित्रं वर्तते। बहुदा मासिकस्यास्य प्रथमे पृष्ठे सम्पादकीयो लेख: सरल-संस्कृतेने प्रकाश्यते। अत्यन्तं सरला किन्तु शुद्धा संस्कृतभाषा मासिकस्यास्य आकर्षणमेव।



**वैशिष्ट्यम्** –

- संस्कृत-बालसंवादे विषयवैविध्यमपि दरीदृश्यते। आयुर्वेद: इतिहास: व्याकरणं, कथा, सचित्रकथा, शब्दरञ्जनी, काव्यम्, अमरकोश:, विनोदकणिका, प्रहेलिका, संशोधनलेखा:, ज्ञानस्तम्भ: वार्ताश्चेति विविधा: विषया: संस्कृत-बालसंवादस्य परिपूर्णत्वं कथयन्ति।
- आयुर्वेदाधारितं 'देहे पञ्चात्मके युक्ता चिकित्सा पाञ्चभौतिकी' इति स्तम्भसत्रं गतेभ्य: पञ्चवर्षेभ्य: प्रचलदस्ति। गवेषणयुक्ते लेखस्तम्भेऽपि गतेभ्य: सार्धत्रिवर्षेभ्य: 'संस्कृतोद्भविनी (आङ्ग्लभाषा)' इति डॉ. पु.ना. ओक महोदस्य गवेषणपूर्णं लेखनं प्रकाश्यते। व्याकरणपाठ:, सचित्रकथा, अमरकोश:, शब्दरञ्जनी चेति मुख्यवैशिष्ट्यं बालसंवादस्य।
- काऽपि वा बाधा भवतु किन्तु ग्राहक: समये एव मासिकं प्राप्नोत्विति आग्रह: अस्ति श्री. माधव-बडेमहोदयस्य। विशेषतया वक्तव्यं नाम वर्षद्वयात् पूर्वं माधवबडे महोदय: पक्षाघातेन पीडित: आसीत्, तस्मिन्नेव कालावधौ 'संस्कृत-बालसंवाद:' मासिकं ग्राहकन् प्रति गन्तुं विलम्बोऽभवत् किन्तु तदापि मासिकमखण्डितं प्रकाशितं भवति स्म।

**कार्यक्षेत्रम्** – 'संस्कृत-बालसंवाद:' इति संस्कृतमासिकस्य पश्चिममहाराष्ट्रे सञ्चाराधिक्यं दृश्यते। तथैव भारतात् बहि: मॉरिशस् इत्यत्र संस्कृत - बालसंवाद: संवादं साधयति।

**साम्प्रतिकी स्थिति:** – संस्कृत-बालसंवाद: मासिकं नूनमुपयुक्तमेव। ईदृगुपयुक्तस्य मासिकस्य (२००/-) द्विशतं रूप्यकाणि पूरयित्वा साक्षात् चतुर्वर्षात्मकं ग्राहकत्वं कर्तुं शक्यते। क्वचिदेवास्य ग्राहकं प्रति प्राप्तुं विलम्बो भवति किन्तु मासिकमिदमखण्डितं प्रकाश्यते। सम्प्रति द्विशतमिति अस्य

ग्राहकसंख्या वरीवर्तते। सततमुद्यमशीलं 'संस्कृत-बालसंवादः' संस्कृतमासिकं सम्प्रति महाराष्ट्रे प्रकाशमानमेकमेव मासिकं विद्यते इति बालसंवादस्य वैशिष्ट्यम्। धनाभावेऽपि प्रकाशने अखण्डत्वं रक्षत् संस्कृतेच्छाशक्तेः सशक्तमुदाहरणमेव। जनसामान्यं प्रति संस्कृतं गच्छतु अतः सततयत्नशीलः श्री. माधवबडे महोदयो नाम स्वयमेव संस्कृतार्थं कार्यरता कापि संस्था इति प्रेरणास्पदमेव।



## गुञ्जारवः

'गुञ्जारवः' इति अहमदनगरस्थं सुख्यातं त्रैमासिकम्। शाश्वतधर्मो नाम सनातन धर्म इत्युच्यते। स च भारतस्य परम्परायाः धर्मः। तस्य प्रतिष्ठा अबाधिता शाश्वती तिष्ठतु इति हेतुना केचन समानविचाराः धर्मपरायणाः अहमदनगरवासीयाः जनाः समवेत्य १९०१ तमे वर्षे अहमदनगरे 'सनातन-धर्म-सभा' इति संस्थायाः स्थापनाम् अकुर्वन्। अहमदनगरे एतादृशी संस्था पूर्वं नावर्तत। अतः अहमदनगरे हिन्दुधर्मार्थं स्थापिता प्रप्रथमा संस्था नाम 'सनातन-धर्म-सभा' इति। आङ्ग्लशासनकालः, स्वातन्त्र्यसंग्रामः चेति विपत्परिस्थितौ संस्थाकार्यं नष्टप्रायम् अवस्थायाम् आपतितम्। किन्तु स्वातन्त्रप्राप्तेः समनन्तरं कै. भाऊसाहेब चौकर प्रभृतिभिः युवकैः मे मासे १९६० तमे वर्षे संस्थायाः पुनर्स्थापना कृता। ये भारतीयसंस्कृतिनिष्ठाः, ये च शाश्वतधर्मस्य पालयितारस्तेषां कृते जातिभेदनिरपेक्षं कार्यं सभा करोति। शारदीयव्याख्यानमाला, विद्वज्जनसत्कारः, ऋषिपञ्चम्यां तिथौ ऋषितुल्यानां सत्कारः, सभा-कीर्तन-प्रवचनादयः कार्यक्रमाः आयोज्यन्ते सभाद्वारा। किन्तु संस्कृतात् ऋते अस्य शाश्वतहिन्दुधर्मस्य भारतीयसंस्कृतेः संरक्षणं संवर्धनञ्च अश्यकमेव इति सम्यक् विचार्य सनातन-धर्म-सभायाः मुखपत्ररूपेण कस्यचित् संस्कृतनियतकालिकस्य प्रणयनं करणीयम् इति सभया ऐकमत्येन निश्चितम्। गुञ्जारवस्य आरम्भकथा 'गुञ्जारवकथा' इत्यस्मिन् लेखे गुञ्जारवे एव प्रकाशितपूर्वा विद्यते। तदित्थम् -

''यत्सत्यं सनातनधर्मस्य सारभूतं सर्वतत्वजातं संस्कृतभाषायामेव। किञ्च भारतीयसंस्कृतेः संस्कृतभाषैव आधारत्वेन स्थिता। तददिं संस्कृत-संस्कृतिप्रसारात्मकं लक्ष्यमुपलक्ष्य सभायाः मुखपत्रत्वेन किमपि नियतकालिकं प्रकाशनीयमिति पदाधिकारिभिः संकल्पितमासीत्। तत्रापि कै.

पाण्डुरंग काशीनाथ तथा भाऊसाहेब मुळे-महोदयैः काष्ठगतप्रयत्नजातम् आस्थाय गुञ्जारवाख्या त्रैमासिकी पत्रिका प्रकाशनीयते समुद्घोषितम्। नगरस्थित-सारडा-महाविद्यालयस्य संस्कृतविभागाध्यक्षे डॉ. व. त्र्यं. झांबरे महादये सभया प्रधानसम्पादकस्य धुरा विन्यस्ता। १४ फ्रेबु १९६६ दिनामे महाराष्ट्र- राज्यविधानपरिषदः तदानीन्तनस्य अध्यक्षस्य श्री. वि.स. पागे महाभागस्य करकमलाभ्यां गुञ्जारवस्य प्रथमाङ्कः प्राकाश्यं गतः।''[३८]

गुञ्जारवस्य पञ्जीयनक्रमाङ्कः R.N.I.No. १६७०१/६५ इति वर्तते। सनातनधर्म-सभायाः यद् घोषवाक्यं वर्तते तदेव घोषवाक्यं गुञ्जारवस्य घोषवाक्यमस्ति- **'धियो यो नः प्रचोदयात्'** इति। गुञ्जारवस्य आद्य संस्थापकः श्री. पांडुरङ्गशास्त्री मुळे महाभागः आसीत्। सनातन-धर्म-सभायाः बहूनि वर्षाणि यावत् सः सचिवः तथा च अध्यक्षोऽपि आसीत्। संस्कृतासक्तेन महदयेनैव स्वयम्प्रेरणया 'गुञ्जारवः' इत्येषा पत्रिका प्रवर्तिता। एषा पत्रिका अधुना ५३ तमे वर्षे पदं करिष्यति। मुळे-महोदयस्य प्रयत्ना एव प्राधान्येन हेतुभूताः। आद्यसम्पादकपदम् अलमुर्वाणो डॉ. व. त्र्यं. झांबरे महोदयोऽपि 'गुञ्जारवः' पत्रिकायाः परिष्काराय सुबहु कार्यमकार्षीत्। प्रारम्भे सम्पादनमण्डले डॉ. द. ग. जोशी, डॉ. दे.ख. खरवण्डीकरः, डॉ. म.ना. बोपर्डीकरः, डॉ. श्री. म. केळकरः इत्येतेषां समावेशः आसीत्। श्री. भाऊसाहेब मुळे महोदयो व्यवस्थापकः प्रकाशकश्च आसीत्। आदौ गुञ्जारवस्य वार्षिकशुल्कं केवलं रूप्यक-पञ्चमवर्तत। गच्छता कालेन महार्घता- पिशाचिकया निजकरालरूपे प्रकटिते प्रथमं ३५ रूप्यकाणि अनन्तरं ५० रूप्यकाणि, सम्प्रति ६० रूप्यकाणि इति गुञ्जारवस्य वार्षिकं शुल्कं वर्तते।

१९८७ वर्षपर्यन्तं सम्पादकधूः डॉ. झांबरे महोदयेन कुशलतया समीचीनतया च ऊढा। किन्तु १९८७ तमे वत्सरे, आद्यसम्पादके डॉ. झांबरे





महोदये निवासार्थं पुण्यपत्तनं (पुणे) प्रयाते कै. भाऊसाहेब मुळे महोदयेन सम्पादनसूत्राणि डॉ. देवीप्रसाद-खरवण्डीकर महोदयाय समर्पितानि।

गुञ्जारवस्य आरम्भकाले सनातनधर्म-सभायाः कार्यालयात् अर्थात् 'काळेश्वर-मन्दिरं, घुमरेगल्ली (वीथी), अहमदनगरं, महाराष्ट्रम्' इत्यस्मात् स्थानात् गुञ्जारवः प्रकाशते स्म। किन्तु कालान्तरेण गुञ्जारवस्य पत्रसमेतः परिवर्तितः। प्रा. डॉ. दे. ख. खरवण्डीकरः, गीतायनं, भूखण्डः क्र. ७, नरहरनगरसमीपे, गुलमोहरमार्गः, अहमदनगरं, महाराष्ट्रम्-४१४००१ इति सम्प्रति गुञ्जारवस्य सम्पर्क-सङ्केतो विद्यते।

**उद्दिष्टम्** - सनातन- शाश्वतधर्मरक्षणार्थं संस्कृतं तु अत्यावश्यकमेव। तदर्थं संस्कृतं रक्षणीयम्। संस्कृतं रक्षितुं संस्कृतविदुषां नितराम् आवश्यकता वर्तते। एताभ्यां भारतीयसंस्कृतेः संरक्षणं भवति। अतः संस्कृतभाषायाः संस्कृतविदुषां भारतीयसंस्कृतेश्च संरक्षणं संवर्धनार्थं सनातन-धर्म-सभायाः मुखपत्ररूपेण १४ फेब्रु. १९६६ तमे वर्षे 'गुञ्जारवः' इति संस्कृतत्रैमासिकस्य प्रकाशनं स्व. डॉ. व. त्र्य. झांबरे महोदयस्य सम्पादकत्वे सफलतया आरब्धम्। गुञ्जारवे तथा उद्दिष्टोल्लखः प्राप्यते-

''संस्कृतपत्रकारिता नाम साक्षदसिधाराव्रतम्। एवं सति किमर्थं तदङ्गीकृतमिति चेत्, श्रूयताम्। आदौ तावत् संस्कृत- भाषा खलु सर्वेषां भारतीयनाम् अनर्घः शेवधिः, यस्य रक्षणमस्माभिः सर्वात्मना विधेयम्। अपरं च- मृत्युशय्यानिलीनस्य कै. भाऊसाहेब-मुळेमहोदयस्य मां (डॉ. खरवण्डीकरमहोदयं) प्रति इत्थम् अन्तिमं वचनमासीत्- 'गुञ्जारवविषये सर्वदा दत्तावधानेन भाव्यम्' इति। इदं वचनं शिरसि निधाय अस्माभिः गुञ्जारवकार्यं क्रियते।''[३९]

**स्वरूपम्** - 'गुञ्जारवः' इति त्रैमासिकं पूर्णतया संस्कृतेन प्रकाश्यते। त्रैमासिकस्यास्य भाषा उच्चस्तरीया किन्तु सुगमा संस्कृतभाषा विद्यते।

लघुपुस्तिका इति आकृतिः गुञ्जारवस्य। बहुदा नभोनीलवर्णयुक्तं कदाचिच्च हरितवर्णयुक्तं मुखपृष्ठं भवति गुञ्जारवस्य। मुखपृष्ठे एव ॐकारसहित धियोयो नः प्रचोदयात् इति घोषवाक्यं मुद्रितं दृश्यते सर्वदा। गद्यविभागः, पद्यविभागः, बालविभागः (बालानां सुखबोधाय इति नाम्नाप्रसिद्धः), प्रासङ्गिकरचनाः कदाचित् विज्ञापनानि इति अन्तर्मुखं वर्तते गुञ्जारवस्य। प्रायः चत्वारिंशत् पृष्ठात्मकं वा ततोऽपि अधिकपृष्ठात्मकमिदं नियतकालिकं सुबद्धं वर्तते। मुखपृष्ठस्य अधोभागे तिथिः, मासः, वर्षादीनां मुद्रणं क्रियते। गुञ्जारवस्य द्वितीये पृष्ठे सम्पादकमण्डलस्य संक्षिप्तविवरणं, काश्चन सूचनाः, पत्रव्यवहारसमेतश्च नित्यं वर्तते। गुञ्जारवस्य अन्तिमं पृष्ठं विज्ञाप्तेः वर्तते। अनुक्रमणिकायाः अनन्तरं सम्पादकीयं, तदनन्तरं लेखाः, काव्यानि, कदाचित् वार्ताः विज्ञाप्तिश्च इति गुञ्जारवस्य सामान्यम् अतरङ्गस्वरूपम् अभिलक्ष्यते।

**वैशिष्ट्यम्** –

- गतसप्तचत्वारिंशद्वर्षाणि नियतवेलं मासत्रयान्तरेण प्रकाशमानमिदं अखिले महाराष्ट्रराज्ये एकमेव संस्कृतनियतकालिकं वर्तते। अर्थात् त्रैमासिकरूपेण निरन्तरं प्रकाश्यमानं महाराष्ट्रराज्यस्य ज्येष्ठं संस्कृतनियतकालिकं नाम गुञ्जारवः।
- गुञ्जारवामाङ्काः भारतवर्षे प्रायः सर्वेषु राज्येषु पठ्यन्ते। इदं वचनं प्रमाणयन्ति वाचकानां भूयांसि परितोषपत्राणि।
- सम्पादकीयलेखाः उत्तमाः सन्ति। लेखानां भाषाशैली सरसा प्रसादमधुरा च विद्यते। तत्रापि लालित्यपूर्णा अकृत्रिमरचनाशैली विशेषं महत्त्वं भजते। सम्पादकीयेषु सर्वदा विषयवैविध्यं दृष्टिगोचरं भवति। संस्कृताधारिताः, शास्त्रीयाः, अभिनन्दनपरा प्रशस्तीपराः





श्रद्धाञ्जलिपराः, राजनैतिकाः, सामाजिकाः, आधुनिकाः प्रायः सर्वप्रकारकाः विषयाः चर्चिताः भवन्ति सम्पादकीयेषु। सम्पादकीये सम्पादकस्य स्पष्टमतप्रतिपादनं दरीदृश्यते। यथा– ''एवं गतेऽपि मन्त्रिमहोदयैः योऽपरो विचारः स्वीयभाषणे प्रकटितः सः महत्त्वपूर्णः। संस्कृतस्य अध्ययनम् (अर्थात् अध्यापनं च) प्राथमिककक्षातः एव प्रारब्धव्यमिति यत्तैः समुद्घोषितं तन्महत्त्वपूर्णम्। यदि प्रत्यासन्ने भविष्यत्काले तद्विचारस्य कार्यान्वयनं भवेत्तर्हि साधु। 'यथा वाचस्तथा क्रियाः' इति न्यायेन इदं प्रत्यक्षताम् आपत्स्यते तर्हि नूनं मन्त्रिमहोदयाः धन्यवादार्हाः भवेयुः । नो चेत् 'गीर्वाणवाणी सर्वासां भाषाणां जननी मता' इत्यादीनि संस्कृतस्य महिमानं गायन्ति वचनानि बहुशः श्रूयन्ते। प्रत्यक्षे तु संस्कृतविषयस्य पाठ्यक्रमान्निष्कासनम् एवानुभूयते। वस्तुतः आचारोच्चारविचारस्वरूपायाः त्रिसूत्र्याः सिद्धये संस्कृतस्य आवश्यकता यस्मिन् दिवसे शासनेन अवधार्येत स सुवर्णाक्षरमण्डित इति मंस्यते इत्यलं विस्तरेण।''[४०]

- अनुज्झितसदभिरुचयो धर्मनीतिसंस्कृतिप्रधानाः लेखाः गुञ्जारवे स्थानं लभन्ते। एतादृशं नवीनविषयमपि साहित्यं गुञ्जारवेण न कदापि हेयपक्षे स्थाप्यते।
- गुञ्जारवस्य विशेषाङ्काः प्रतिवर्षं निश्चिते समये एव प्रकाश्यते इति न अपि तु यथावसरं तथा विशेषाङ्कानां प्रकाशनं क्रियते। श्री ज्ञानेश्वरः, ज्ञानेश्वरी, श्रीसमर्थरामदासस्वामी इत्यादिविषयानधिकृत्य प्रसङ्गविशेषमनुसृत्य गुञ्जारवस्य विशेषाङ्काः प्रकाशिताः, ये विद्वज्जनानां परितोषाय कल्पन्ते।

- नवनवीनलेखकेभ्य: प्रोत्साहनं दत्त्वा तेषां साहित्यं प्रकाश्यते। 'पुराणमित्येव न साधु सर्वम्'[४१] इति महकवि-कालिदासीया नीतिरत्र उपादीयते।
- 'बालानां सुखबोधाय' इति गुञ्जारवस्य बालविभाग: सर्वत्र स्पृह्यते। ज्ञानरञ्जनात्मका: लेखा अपि गुञ्जारवस्य इतरेभ्य: वैशिष्ट्यं ख्यापयन्ति। यथा- 'ज्ञानाञ्जनाय लोकोक्ती रञ्जनाय च कल्पते' इति शीर्षकस्थे लेखे आङ्ग्ल-मराठी-हिन्दी भाषास्था: लोकोक्तय: आभाणका: च संस्कृतेन अनूद्य प्रकाशिता: ।

- पितु: पुत्रोऽतिरिच्यते। (बाप से बेटा सवाई)
- आवश्यकता साक्षाद्, भवति नवान्वेषणस्य जनयित्री। (Necessity is the mother of invention)
- इच्छा बलवती यत्र तत्र मार्गो न दुर्लभ:। (where there is will there is way.)
- प्राज्ञस्य खलु पर्याप्तं भवेत् शब्दानुशासनम् । (शहाण्याला शब्दाचा मार)
- पादपो ज्ञायते कुसुमेन, मानसं ज्ञायते वचनेन। (झाडा जाणावे फुले, मानस जाणावे बोले)''[४२]

- गुञ्जारवसम्पादकाय डॉ. देवीप्रसाद-खरवण्डीकर महोदयाय गुञ्जारवार्थं १८ मे २०१० तमे वर्षे उत्तर प्रदेश- संस्कृत-अकादम्या: 'महर्षि: नारद: संस्कृत-पुरस्कार:' लब्ध:।
- गुञ्जारवस्य सम्पादकमण्डलस्थानां लेखा: उत्तमा: सन्ति। अन्येभ्य: राज्येभ्योऽपि लेखका: स्वरचनाभि: गुञ्जारवं विभूषयन्ति।
- रोप्यमहोत्सवीय - विशेषाङ्कस्य प्रकाशनं विधानसभासभापतिचरै: विचारवतां धुरीणै: कै. बाळासाहेब भारदे महोदयै: २३-१०-





१९९३ तमे दिने कृतम्। अस्मिन् अङ्के भारतवर्तिनां पण्डितप्रकाण्डानां लेखा: विराजन्ते।

**कार्यक्षेत्रम्** - 'गुञ्जारव:' त्रैमासिकं आरम्भे महाराष्ट्रराज्ये आधिक्येन प्रसृतं भवति स्म। किन्तु डॉ. देवीप्रसाद-खरवण्डीकरमहोदयेन गुञ्जारवस्य कीर्ति: सुदूरं प्रसृता। महाराष्ट्रं, मध्यप्रदेश:, गुजरात:, उत्तरप्रदेश: इत्यादिषु भारतस्य सर्वेषु राज्येषु गुञ्जारवस्य रव: निनादते।

**साम्प्रतिकी स्थिति:** - गुञ्जारवस्य आर्थिकी स्थिति: वक्तव्या चेत् त्रैमासिकस्यास्य शाश्वतस्वरूपो निधिरस्ति। स्वयंप्रेरणया कैश्चित् दातृभि: द्रव्यं दीयते। सामान्येति स्थिति: गुञ्जारवस्य। राष्ट्रपति-पुरस्कारेण गौरवान्वितस्य नूनं महाराष्ट्रभूषणस्य डॉ. देवीप्रसाद-खरवण्डीकर महोदयस्य कुशले प्रधानसम्पादकत्वे अखिलभारत-वर्षे गुञ्जारव: दिङ्निनादते। गुञ्जारवस्य सम्पादक-मण्डलपरम्परा नाम संस्कृतविदुषाम् सम्मेलनमेव। अत: गुञ्जारवस्य सम्पादकमण्डलस्य परिचयोऽग्रे दीयते।

**सम्पादकमण्डलम्**

(१) प्रधानसम्पादक:-महामहोपाध्याय: डॉ. देवीप्रसाद: खरवण्डीकर:
अहमदनगर-महाविद्यालयास्य संस्कृत- विभाग-
प्रमुखपदात् निवृत्त:। राष्ट्रपति-पुरस्कार-विजेता।
नैकै: पुरस्कारै: गौरवान्वित: महाराष्ट्रस्य विख्यात:
संस्कृतविद्वान्।

(२) कार्यकारी सम्पादक: - प्रा. डॉ. श्रीकान्त: केळकर
(संस्कृतं,हिन्दी, इतिहास: आदिषु विषयेषु एम. ए.
पदवी, सेवानिवृत्त:।)

(३) कार्यकारि-सम्पादिका - डॉ. प्रभा मुळे
(संस्कृत, मराठी विषययो: एम्.ए. पदवी। एम्. एड्. , शिक्षणशास्त्रे पीएच्. डी.। सेवानिवृत्ता प्राधापिका।)

(४) सम्पादक: - डॉ. मधुसूदन: बोपर्डीकर:
(संस्कृतं, मराठी, अर्धमागधी-पालि:, प्राचीन-भारतीय-संस्कृति: इत्येतेषु विषयेषु एम्.ए. पदवी। संस्कृते पीएच्.डी. पदवी। सङ्गीत-अलंकार:)

(५) सम्पादिका - प्रा. डॉ. सुलभा ठकार
('संगीताचार्य:'प्राप्तोपाधि:।आयुर्वेद-महाविद्यालयस्य संस्कृतप्राध्यापिका इति पदात् सेवानिवृत्ता। संगीते संस्कृते च विपुलं लेखनम्।)

(६) सम्पादक:- पं.ल.पं जांभोरकर:
(प्राचीनपरम्परया संस्कृताध्ययनम्। देशे विदेशे च संस्कृतप्रचारकार्यम्। पुण्यपत्तने निवास:।)

(७) सदस्य:- डॉ. रवीन्द्र: मुळे
(पुणे विद्यापीठे संस्कृत-विभागाध्यक्ष:, दर्शन-विभागाध्यक्ष:, प्रगतसंस्कृताध्यनकेन्द्रस्य प्रमुखसञ्चालक:।)

(८) सदस्या - श्रीमती निर्मला नगरकर
(संस्कृते एम.ए.। पोस्ट- कार्यालयात् निवृत्ता।)

(९) सदस्या- श्रीमती मृदुला गडनीस
(संस्कृत, मराठीभाषायाम् एम.ए., बी.एड् । निवृत्ता शिक्षिका।)



एवं संस्कृतविदुषाम् आवस एव गुञ्जारव: इति आस्माकीनं महद्भाग्यमेव। गुञ्जारव: इति त्रैमासिकस्य प्रकाशनसातत्यं, रचना तथा च गुञ्जारवस्य भाषाशैली अत्युत्तमा मधुरा, मोदकरी सुबोधा च वरीवर्तते। लेखानां स्तर: विषयवैविध्यं च मन: तोषयति। गुञ्जारवो नाम ललितसाहित्यस्य अनर्घ: शेवधि:। कदाचित् शीर्षकहीना: सम्पादकीय-लेखा: दृष्टिगोचरा: भवन्ति। सचित्रवार्तानां न्यूनता कदाचित् अनुभूयते। तथापि गुञ्जारव: इति परिपूर्णं नियतकालिकं विद्यते इति वक्तुं शक्यते। अन्ततो गत्वा गुञ्जारवीयं यशोरहस्यं वक्तुं श्लोकपङ्क्तीयं पर्याप्ता।

लोकम्पृणेन यशसा महिमानमाप्तान्
गीर्वाणवाचि नितरां दृढबद्धभावान्।
विद्वद्वरांश्च बहुशास्त्रकलाप्रवीणान्
गुञ्जारवो ऽर्चति सदैव महानुभान्।।[४३]

गुञ्जारवस्य पठनेन निश्चप्रचं पाठकानां भाषास्तर: अभिवर्धते इति अनुभव:। ईदृशं संस्कृतनियतकालिकं महाराष्ट्रात् उदभवत् इति महाराष्ट्रस्य भाग्यभवान्या: अस्मत्सु नूनम् आशीर्वादा:।

# संविद्

'भारतीय विद्या भवनं, मुम्बई,' विद्यापीठस्य कुलपतिः मा.री.कन्हैयालाल मुन्शी महोदयः महान् संस्कृतानुरागी आसीत्। संस्कृतमेव प्रेरणास्थानमतः संस्कृतवाङ्मयसेवारूपेण १५ ऑगस्ट १९६४ तमे वर्षे 'संविद्' नामकं संस्कृतत्रैमासिकं महोदयेन आरब्धम्। अस्य त्रैमासिकस्य, घोषवाक्यम् ऋग्वेदात् उद्धृतमस्ति। **आ नो भद्राः क्रतवो यन्तु विश्वतः। (ऋ.१.८९.१)** संस्कृतत्रैमासिकस्यास्य आद्य सम्पादकः श्री.जयन्तकृष्णः दवे महोदयः। सम्प्रति श्री. दवे महोदयः एव प्रधान-सम्पादकत्वेन पदभारं वहति। संविदः पञ्जीयनक्रमाङ्कः ९४३१/६४ इत्यस्ति। श्री. एस. रामकृष्ण महोदयद्वारा भारतीयविद्याभवनस्य 'संविद्' इति संस्कृतत्रैमासिकं प्रकश्यतां गच्छति। श्री. अतुल गोराडिया महोदयस्य 'सिद्धि प्रिन्टर्स' खेतवाडी १३ वीथी, मुम्बई इत्यत्र संविदः मुद्रणं भवति।

**उद्दिष्टम्** - संस्कृतविषये भारतीय - विद्या - भवनस्य स्नेहादरश्च विशेषोऽस्ति अतः संस्कृतभाषा धर्म-तत्त्वज्ञानभाषेति मर्यादिता न भवतु उत लोकभाषा जनभाषा च भवतु इति भारतीयविद्याभवनस्य निर्धारो वर्तते। संस्कृतस्य प्रचार-प्रसारार्थं च यच्छक्यं तद् सर्वं संसाधयितुं भवनस्य एको महत्त्वपूर्णः पदन्यासो नाम 'संविद्' संस्कृतत्रैमासिकमिति। अस्मात् 'संविद्' संस्कृतत्रैमासिकात् संस्कृतं सुदूरं जनसामान्यं प्रति गच्छतु इति संविदः मुख्योद्दिष्टं वरीवर्तते।

**स्वरूपम्** - आदौ संविदः स्वरूपं विशदीक्रियते। संविदः त्रैमासिकस्य बाह्यस्वरूपं लघुपुस्तकसदृशं वर्तते। मुखपृष्ठं बहुशः नानावर्णचित्रयुतम् आकर्षकञ्च विद्यते। मुखपृष्ठस्य वामतः उपरि भारतीय - विद्या - भवनस्य मानचिह्नं तथा मानचिह्नस्याधः भारतीयविद्याभवनस्य संस्कृतत्रैमासिकपत्रिका





इति मुद्रितं वर्तते। मुखपृष्ठस्य दक्षिणतः उपरि 'संविद्' बृहदक्षरैः मुद्रितं दृश्यते। एतयोः अधः एकस्यामेव पङ्क्तौ वर्षम्, अङ्कः, मासः, मूल्यञ्च स्पष्टाक्षरैः मुद्रितं वर्तते। तदनु अधः आकर्षकं चित्रं संविदः सौंदर्यं वर्धयति। संविदः अन्तरङ्गमपि सुनिश्चितं वर्तते। उद्घाटिते सति प्रथमे पृष्ठे संविदः 'आ नो भद्रा क्रतवो यन्तु विश्वतः। ऋ.१.८९.१।' इति घोषवाक्यम्। घोषवाक्यस्य साक्षादधः प्रार्थना। प्रार्थनामूः प्रत्येकं भिन्नाः आधिक्येन च वेदेभ्यः उद्धृताः दृश्यन्ते। अग्रीमे पृष्ठे पाठकप्रतिक्रिया, सूचना, ग्राहकशुल्कम् इति निश्चितः क्रमः दृष्टिपथम् आयाति। तृतीये पृष्ठे संविदः सम्पादकमण्डलस्य पदानुसारं सूची तदनु विषयानुक्रमणिका च प्रदीयते। चतुर्थे पृष्ठे लेखकेभ्यो निवेदनमिति सुनिश्चितः क्रमः संविदः सुनियोजनं सुसम्बद्धतां प्रतिपादयति।

**वैशिष्ट्यम्** -

- 'संविद्' संस्कृतत्रैमासिकी पत्रिका नियतकालिकं वा वैशिष्ट्यपूर्णमेव वर्तते। नियतकालिकस्य अस्य मुख्यं वैशिष्ट्यं नाम लेखकानां लेखानाञ्च वैविध्यम्। अशेषभारतात् लेखकाः स्वस्य पाण्डित्यपूर्णाः लेखाः संविदि प्रकाशयन्ति। एन.रङ्गनाथशर्मा, डॉ.डि.वि.गुण्डप्पाः, श्री.राजपालशास्त्री, डॉ.डी.एन.पण्ड्या, श्री.भाईशमरः पुरोहितः, एस. जगन्नाथः, श्री. रामचन्द्रः गाडगीळः, श्री. टी. ए. सन्तानगोपालः शास्त्री इत्यादिभिः नैकैः संस्कृतसुधिभिः उत्तोमोत्तमलेखैः संविदः श्रेष्ठत्वं नित्यं रक्षितम्। संस्कृतमिति विषयाधारिताः नैके लेखाः संविदि प्रकाशिताः। किन्तु संस्कृतविदुषाम् भिन्नविषयकाः लेखाः अपि अस्य संस्कृतत्रैमासिकस्य अनन्यं महत्त्वं ब्रूते। प्राचीनाः, ऐतिहासिकाः,

आधुनिकाः वर्तमानाश्च सर्वेऽपि विषयाः संविदि अन्तर्भवन्ति। उदाहरणार्थं विज्ञानाधारितलेखांशमग्रे दीयते।

''जनाः विश्वसन्ति यद् चन्द्रः पृथिव्याः परिक्रमां करोति। परं वस्तुतस्तु उभौ अपि पिण्डौ कश्चिद् अन्यदेव केन्द्रं परिक्रमन्तो सूर्यस्यापि सर्वतः परिभ्रमतः। .... एतद् सौरमण्डलम्, अन्य सौरमण्डलस्य सर्वतो, त्रयोदश-मैल-प्रति- सेकंड-वेगेन परिभ्रमन्नास्ते। अस्याम् आकाश-गंगायां तु अस्मत्सौरमण्डलं द्विशत-मैल-प्रति-सेकण्डे धावति। अस्मदीया एषा आकाशगंगा, आकाश-गंगानां विराड्-समूहे, शत-मैलं-प्रति-सेकण्ड-रंहसा कुत्रचित् धावति।''[४४]

- लेखकाः अपि स्वकीयान् स्पष्टविचारान् मण्डयितुं संविद् आश्रयन्ते। यथा अग्रे दीयते - ''अस्य महतो भारतराष्ट्रस्य पूज्यतमः शेवधिः श्रुतिरेव। हिन्दूसमाजस्य धर्मस्य च सर्वस्वस्वरूपो वेदः। भारतस्य आचारः, धर्मः, संस्कृतिः, दर्शनसूत्राणि, विविधानि च शास्त्राणि वेदाधृतानि सन्ति। अतो वेदविषये निरर्गलोक्तिभिर्जनानां महती श्रद्धा विश्वास-भावना च भज्यते। स्वकल्पितविचाराणां प्रकटीकरणात् पूर्वमेते तुलनात्मकपद्धतेः प्रणेतारः कदापि नैतच्चिन्तयन्ति यद् विराट् हिन्दूसमाजस्य आस्तिकता, धर्मभावनाश्च विक्षताः भवन्ति।''[४५] एवमुत्तमभाषाशैलीयुक्ताः लेखाः अद्यापि संविदः गरिमाणं वर्धयन्तः सन्ति।
- संविदः पद्यप्रेम इति अपरं वैशिष्ट्यम्। संविदः अङ्केषु प्रसिद्धाप्रसिद्धानाम् उत्तम-सुभाषितानां यत्र तत्र उद्धरणं लभते। पारम्पारिकपद्यं स्फुटपद्यं च संविदि भृशमुपलभ्यते। संविदः केषुचित् अङ्केषु लेखानामपेक्षया पद्यप्राबल्यम् अधिकं दृश्यते। यथा संविदः





२००० तमवर्षस्य (३६ वर्षम्, ४ अङ्कः, मे मासः) अङ्कं पद्याङ्कं वक्तुं शक्यते।

- संविदः सम्पादकीयलेखाः विशिष्टं स्थानं भजते। सर्वविषयस्पर्शिनः सम्पादकीयलेखाः संविदः आकर्षणस्थानम्। विषयवैविध्यं लेखनशैली चोत्तमा वर्तते। संविदः आरम्भकाले सम्पादकीयलेखाः क्लिष्टाः समासप्रचुराः दृश्यन्ते। किन्तु एतेषु दिवसेषु सा क्लिष्टता समासप्राचुर्यश्च न्यूनं जातमिति अनुभूयते। क्वचिदेव अमेषु सम्पादकीयाः लेखाः नोपलभ्यन्ते।
- ६०-७० पृष्ठात्मकं कदाचित् ८० पृष्ठात्मकमिदम् एकमेव नियतकालिकं महाराष्ट्रात् प्रकाश्यते।
- सचित्रं संस्कृतवार्ताः कदाचित् लेखाश्च संविदि द्रष्टुं शक्यते।
- अभिजात-संस्कृताय संविदि सर्वदा प्रोत्साहनं लभते।

**कार्यक्षेत्रम्** - भारतीयविद्याभवनस्य संस्कृतत्रैमासिकं 'संविद्' समग्रे भारते सुविदतमस्ति। भारतस्य प्रायः सर्वेषु राज्येषु संविदः प्रसारो वर्तते। लेखकानां सूचीं दृष्ट्वा तत् स्पष्टतया ज्ञायतेऽपि।

**साम्प्रतिकी स्थितिः** - 'संविद्' संस्कृतत्रैमासिकं भारतीयविद्याभवनात् प्रकाश्यते। भारतीय-विद्याभवनम् आर्थिकदृष्ट्या सक्षमं वर्तते अतः संविदे आर्थिकसमस्या नगण्येति वक्तुं शक्यते। संविदः ग्राहकसंख्या त्रिशताधिका वर्तते। ग्राहकान् प्रति उत्तमोत्तमं संस्कृतसाहित्यं प्रापयितुं सम्प्रति विद्यमानं सम्पादकमण्डलम् अग्रे दीयते।

**सम्पादकमण्डलम्**

| | | |
|---|---|---|
| संस्थापकः | - | कन्हैयालालः मुन्शी |
| अध्यक्षः | - | आर. वेमटरामन् |
| सम्पादकः | - | जयन्तकृष्णः हरिकृष्णः दवे |

सहसम्पादकौ - सुरेशः उपाध्यायः
गिरीषः जानी
उपसम्पादिका - प्राची मोघे
प्रकाशकः - एस. रामकृष्णन्

सर्वेऽपि इमे संस्कृतपण्डिताः संविदः सातत्यं स्तरं च रक्षितुं जागरूकाः सन्ति। केवलं संविदः सातत्यमेभिः न रक्षितमपि तु सम्पादकमण्डलस्यापि रक्षितसातत्यमेतेषां महत्युपलाब्धिः दरीदृश्यते।

संविदः समग्राध्ययनान्ते प्रतिपादयितुं शक्यते यत् १९६४ तमवर्षतः महाराष्ट्रे सातत्येन पृष्ठाधिक्येन च प्रकाश्यमानं 'संविद्' इति एकमेव संस्कृतत्रैमासिकं नियतकालिकं वर्तते। कदाचित् विलम्बेन कदाचिच्च अङ्कद्वयं मिलित्वा संविद् ग्राहकान् प्रति निश्चयेन गच्छति एव। सम्पादकमण्डलस्य स्थैर्यम् अशेषभारतात् च प्राप्यमानं रचनाकाराणां वैविध्यं संविदः यशः ब्रूते। संविदः अन्तरङ्गं बहिरङ्गञ्च उच्चस्तरीयं प्रतिभाति। बहिरङ्गमपि उच्चस्तरीयमिति संस्कृताय भूषणास्पदमेव। किन्तु अन्तरङ्गस्य संस्कृतभाषां सामान्यजनः सहजतया अधिगन्तुं न शक्यनुयात्। केवलं संस्कृतजनाः एव संविदः आस्वादं स्वीकर्तुं शक्नुवन्ति इति अधिकांश–संविदमान् पठित्वा अनुभूतम्। संस्कृतभाषा जनभाषा भवतु इति संविदः उद्दिष्टं साधयितुं सुगम्यायाः संस्कृतभाषायाः प्रयोगः सम्प्रति दृश्यते। किन्तु इदमपि प्रतिपादयितुं मनः समाहिते यत् संविदः पठनेन पाठकानां समृद्धसंस्कृतस्य निश्चप्रचं सुयोग्यः परिचयो भवतीति। भारतीयविद्याभवनस्य संकेतस्थलस्य ईमेल द्वारा अपि संविदा सह संलग्नो भवितुं शक्यते। किन्तु संविज्जनैः सह सहजसम्पर्कस्य अभावः कष्टं जनयति। इति सत्यपि 'संविद्' संस्कृतत्रैमासिकस्य संस्कृताय अमूल्यम् अवदानं महाराष्ट्रं संस्कृतक्षेत्रे उद्ग्रीवं स्थातुं साहाय्यमेव करोति।



## गीर्वाणसुधा

'देववाणीमन्दिरम्' इति मुम्बईनगरस्य सुविख्यातायाः संस्कृतसेवारत–संस्थायाः त्रैमासिकं नियतकालिकं 'गीर्वाणसुधा'। देववाणीमन्दिरस्य स्थापना १९५२ तमे वर्षे अभवत्। सुदूरं संस्कृतस्य प्रसारो भवतु अतः देववाणीमन्दिरस्य मुखपत्ररूपेण संस्थासंस्थापकेन कै. पं.श्री.भि.वेलणकर–महोदयेन १.१०.१९७९ तमे दिने 'गीर्वाणसुधा' नामकं संस्कृतनियतकालिकं मुंबईतः आरब्धम्। अस्य देववाणीमन्दिरस्य कार्यालयात् अर्थात् 'भीमाबाई राणे शाळा, राजाराममोहनः रॉयः मार्गः, गिरगावः, मुंबई – ४००००४' तः गीवार्णसुधा इति त्रैमासिकं नियतकालिकं प्रकाशितं भवति। अस्य नियतकालिकस्य घोषवाक्यमस्ति – **'यथा पयोधेर्लहरीप्रसूता सुधा सुराणाममृतत्वहेतुः।**

**तथैव गीर्वाणसुधापि भूयात् नवीनसारस्वतवीचिभूतेः।।**

**उद्दिष्टम्** – गीर्वाणसुधायाः आद्य सम्पादकः संस्थासंस्थापकश्च पं.श्री.भि. (उपाख्यः) दादासाहेबः वेलणकरमहोदयः गीर्वाणसुधायाः प्रथमे अङ्के एवास्य नियतकालिकस्य उद्दिष्टं स्पष्टं प्रतिपादयति –

''सन्ति भारतवर्षे कानिचित् नियतकालिकानि संस्कृतभाषया प्रकाशितानि। तेषु इदमेकमधिकं संवर्धयितुं समुद्यतावयं देववाणीमन्दिरद्वारा। अस्मदुद्दिष्टं तु यद् अभिनवं संस्कृतवाङ्मयं प्रकाशं याति तद् ज्ञापनम् अतः सर्वे भवन्तः संस्कृतानुरागिणः एतादृशं वृत्तं प्रकाशनार्थं प्रेषयन्तु। तत्र ग्रन्थानां, लेखकानां, प्रकाशकानां, प्रकाशनदिनं, मूल्यं, क्रयस्थानं, पृष्ठसंख्या च इति सर्वं प्रख्यापनीयम्। तथैव संस्कृताभिवृद्ध्यर्थं ये प्रयत्नाः उपक्रमाः, कार्यक्रमाः कुत्रापि संयोज्यन्ते तेषां संक्षिप्तवृत्तमपि प्रकाशयितुकामाः वयम्। तत्रापि भवन्तः सर्वे साहाय्यं ददतु इति विज्ञापना।''[१]

उपर्युक्तेन सम्पादकीयेन ज्ञायते यत् नूतन-संस्कृतसाहित्यस्य विविधस्थानेषु जायमानानां संस्कृतकार्यक्रमाणां परिचयः कारणीयः तेन माध्यमेन संस्कृतप्रेमिणां सम्पर्कः वर्धनीयः इति गीर्वाणसुधायाः प्रकाशनस्य प्रयोजनं स्पष्टम् अभिलक्ष्यते।

**स्वरूपम्** – सद्यः 'गीर्वाणसुधा' इति नियतकालिकं त्रैमासिकं विद्यते। किन्तु संस्कृतनियतकालिकस्य अस्य आरम्भः मासिकरूपेण एव अभवत्। पं.श्री.भि. (उपाख्यस्य) दादासाहेब-वेलणकरमहोदयस्य निधनानन्तरं १९९९ तमात् वर्षाद् आरभ्य इदं संस्कृतनियतकालिकं त्रैमासिकम् अभवत्। एका लघुपुस्तिका यथा दृश्यते तथा अस्य त्रैमासिकस्य बाह्यस्वरूपमस्ति। देववाणीमन्दिरस्यास्य मुखपत्रे एव गीर्वाणसुधायाः ब्रीदवाक्यं उद्धृतमस्ति। नियतकालिकस्यास्य प्रथमे पृष्ठे सम्पादकीयलेखः एव भवति। सम्पादकीयं समनन्तरम् एकं संस्कृतगीतमनन्तरं लेखाः वार्ताः चेति निश्चितं स्वरूपं 'गीर्वाणसुधा' त्रैमासिकस्यास्ति।

**वैशिष्ट्यम्** –

- 'गीर्वाणसुधा' इति त्रैमासिकस्य संस्कृतभाषशैली सरला सुगमा च वर्तते।
- त्रैमासिकेऽस्मिन् दिनाङ्कानुसारं संस्कृतवार्ताः प्रकाशिताः भवन्ति।
- अस्य त्रैमासिकस्य मुख्यवैशिष्ट्यं नाम 'गीर्वाणसुधा' इति त्रैमासिकम् अविलम्बेन सातत्येन च ग्राहकाणां हस्ते प्राप्यते।
- नूतनसंस्कृत-साहित्यनिर्माणार्थं गीर्वाणसुधा नूतनलेखकानां कृते अवसरं कल्पते।
- ललितलेखाः, कथाः, चरित्रवर्णनानि, संस्कृतवार्ताः इति विशेषत्वेन गीर्वाणसुधायां प्रकाश्यन्ते।



- दीपावलीविशेषाङ्क इति वर्षे एकवारं गीर्वाणसुधायाः विशेषाङ्कस्य प्रकाशनं भवति।
- विना अनुदानितं नियतकालिकमिदं प्राधान्येन जनसहभागेन, अंशतः च विविधन्यासैः अद्ययावत् प्रकाश्यतां गच्छति।
- सप्टेम्बरमासे १९९२ तमे वर्षे दिल्ली-संस्कृत-अकादमी-आयोजिते संस्कृत-नियतकालिक-सम्पादक-सम्मेलने देववाणीमन्दिरस्य 'गीर्वाणसुधा' इति संस्कृत नियतकालिकाय सर्वोत्तमनियतकालिकस्य पारितोषिकं लब्धम्।
- देववाणीमन्दिरस्य ये आजीवसदस्याः सन्ति ते एव गीर्वाणसुधायाः ग्राहकत्वं स्वीकर्तुम् अर्हन्ति।
- आजन्म-सदस्यत्वं रु.१००१/- तः अधिकं भारते, तथैव १०१ यू.एस्.डॉलर विदेशे इति आजन्म-सदस्यत्व-शुल्कं वर्तते।

**कार्यक्षेत्रम्** – 'देववाणीमन्दिरम्' इति संस्थायाः कार्यं न केवलं भारते अपि तु विश्वे बहुत्र अस्ति। तद्वत् 'गीर्वाणसुधा' इति देववाणीमन्दिरस्य मुखपत्रस्य सुधाधाराः भारते भारतात् बहिः अपि प्रवहन्ति। भारतस्य प्रायः सर्वेषु राज्येषु तथा अमेरिकायां, युरोपीयदेशेषु च गीर्वाणसुधायाः ग्राहकाः सन्ति। एवं 'गीर्वाणसुधा' इति संस्कृतनियतकालिकस्य विस्तृतं कार्यक्षेत्रं विद्यते।

**साम्प्रतिकी स्थितिः** – देववाणीमन्दिरस्य आर्थिकी स्थितिः उत्तमा अस्ति। 'देववाणीमन्दिरम्' इति एका सधना संस्था इति निश्चयेन वक्तुं शक्यते। पञ्चशतं (५००) जनाः देववाणीमन्दिरस्य आजीवसदस्याः सन्ति। किन्तु नियतकालिकं सफलतां नेतुं बहवः कार्यकर्तारः सर्वदा सक्रियाः सन्ति। गीर्वाणसुधायाः आद्य सम्पादकः कै.पं.श्री.भि.वेलणकरः महोदयः आसीत्। सम्प्रति गीर्वाणसुधायाः सम्पादकमण्डलम् एवमस्ति –

**सम्पादकमण्डलम्**

प्रधानसम्पादकः - प्रा.डॉ.सौ. कमल अभ्यंकर
(निवृत्त-विभागप्रमुखा
एस्.एन.डी.टी. विद्यापीठम्।)
सहसम्पादकः - सौ. वीणा गोडबोले

एतयोः विदुष्योः प्रयत्नसातत्येन गीर्वाणसुधायाः प्रवाहोऽखण्डितो वर्तते। गीर्वाणसुधा इति महाराष्ट्रस्य एकं प्रसिद्धं संस्कृत-नियतकालिकमस्ति। किन्तु कदाचित् अस्मिन् संस्कृत-नियतकालिके मराठीलेखान् दृष्ट्वा आश्चर्यं भवति। तथैव सम्पादकीयलेखानां प्राचुर्यम् अधिकं न दृश्यते। तथापि ये लेखाः गीर्वाणसुधायां प्रकाश्यन्ते ते नूनम् उत्तमविषययुक्ताः स्तरयुक्ताश्च विद्यन्ते। संस्कृतवार्ता-वैविध्यम् अर्थात् विविधस्थानात् संस्कृतवार्ता-सङ्कलनं प्रदानञ्च तदपि दिनाङ्कानुसारमिति गीर्वाणसुधायाः प्रमुखवैशिष्ट्येषु मुख्यं वैशिष्ट्यम्। स्फुटरचनार्थं, ललितसंस्कृतसाहित्यार्थं गीर्वाणसुधायाः अवदानं नूनं स्पृहणीयमेवात्र नास्ति सन्देहलेशः। 'गीर्वाणसुधा' इति संस्कृत-त्रैमासिकं महाराष्ट्रस्य गरिमाणं भूयो भूयो वर्धयत् संस्कृतप्रसारकार्यं निरन्तरं करोतीति प्रकर्षेणानुभूतम्।



# संस्कृत-संवर्धनम्

संस्कृतस्य प्रसारार्थं संस्कृतसेवाव्रतिना प्राचार्य-डॉ. मधुसूदन-बोपर्डीकर महोदयेन २०१० तमे वर्षे संस्कृत-अकादमी महाराष्ट्रराज्ये भवतु अतः चिन्तनमारब्धम्। किन्तु शासकीयं कार्यं शीघ्रगत्या न भवति अतः ४ एप्रिल २०११ इति वर्षप्रतिपदः सुदिने 'संस्कृत-सेवा-सङ्घः, नगरम्' इत्याख्यायाः संस्थायाः स्थापनं प्राचार्य डॉ. मधुसूदन-बोपर्डीकरमहोदयेन कृतम्। अस्याः संस्थायाः बहुयामि कार्यं वर्तते। सुदूरं संस्कृत-प्रसारस्य उत्तमं माध्यमं नाम नियतकालिकमिति मत्वा ४ एप्रिल २०११ इत्येव शुभमुहूर्ते संस्कृत-सेवा-सङ्घस्य मुखपत्ररूपेण 'संस्कृत-संवर्धनम्' इति त्रैमासिक-नियतकालिकस्य अहमदनगरतः प्रकाशनम् आरब्धम्। संस्कृत-सेवा-सङ्घस्य घोषवाक्यमस्ति- **'सततं सेव्यतां संस्कृतम्'** इति। किन्तु संस्कृत-सेवा-सङ्घस्य मुखपत्रस्य 'संस्कृत-संवर्धनम्' इति संस्कृतत्रैमासिकस्य घोषश्लोको वर्तते।

**जयतु संस्कृतं जयतु संस्कृतिः। अस्माकं स्यात् तदर्थं कृतिः।**
**जपति निरन्तरमेतं मन्त्रम्। संस्कृत-संवर्धनाख्य-पत्रम्।।**

स्वोद्देश्यं स्पष्टयितुमेव उपर्युक्तः श्लोकः संस्थायाः मुखपत्रे बुद्ध्या प्रकाश्यते। तथापि उद्दिष्टविवरणम् अग्रे दीयते।

**उद्दिष्टम्** - प्राचार्य डॉ. मधुसूदनः बोपर्डीकरः महोदयः हृदयेन आचरणेन च परमदेशभक्तः। भारतीय-संस्कृतिविषये परमादरः तां च रक्षितुं यथा शक्यं सर्वे प्रयत्नाः विधेयाः इति डॉ. म.बोपर्डीकर-महोदयस्य स्वभाव एव अस्ति। विना संस्कृतं नैव संस्कृतिः इति सम्यक् जानन् डॉ. म.बोपर्डीकर महोदयः संस्कृतस्य प्रचारप्रसारार्थं 'संस्कृत-संवर्धनम्' मिति संस्कृत त्रैमासिकस्य

प्रणयनम् अकरोत्। अनेन नियतकालिकमाध्यमेन संस्कृतक्षेत्रस्य वार्ताः, संस्कृतेतर वार्ताः, नूतनानां संस्कृत-लेखकानां कवीनां कृते च किञ्चित् व्यासपीठं निर्मातुं 'संस्कृत-संवर्धनम्' सहाय्यीभूतं भवतु अतः अस्य 'संस्कृत-संवर्धनम्' इति संस्कृत-नियतकालिकस्य मुख्योद्देशो वर्तते।

**स्वरूपम्** - 'संस्कृत-संवर्धनम्' इति संस्कृतनियकालिकं त्रैमासिकम् अस्ति। लघुपुस्तिकासदृशं अस्य बाह्यस्वरूपं दृश्यते। कृष्णधवलवर्णयोजना मुखपृष्ठात् आरभ्य अन्तिमपृष्ठपर्यन्तं दृश्यते। मुखपृष्ठे 'नगरस्थ-संस्कृत-सेवा-संघस्य मुखपत्रम्। संस्कृत-संवर्धनम्।' इति मुद्रितं वर्तते। मुद्रणसमये लेखनसाहित्यस्य निश्चितः क्रमः अस्मिन् न वर्तते। सामान्यस्वरूपं सम्प्रति अस्य संस्कृतत्रैमासिकस्य दृश्यते।

**वैशिष्ट्यम्** -

- 'संस्कृत-संवर्धनम्' इति संस्कृत-त्रैमासिकस्य भाषाशैली सरला सुगमा च वर्तते।
- अस्मिन् संस्कृतत्रैमासिके संस्कृतक्षेत्रस्य वार्ताः तु भवन्त्येव किन्तु संस्कृतेतराः अपि विविधाः वार्ताः बहुदा सन्ति। ताः सर्वाः अपि वार्ताः सचित्रं दातुं सम्पादक-मण्डलस्य आग्रहो विशेषेण अभिज्ञायते।
- संस्कृत-संवर्धनस्य त्रैमासिकस्य इतोऽपि मुख्यं वैशिष्ट्यं नाम दिग्गजानां प्रभृतीनां कृते विशेषशैल्या श्रद्धाञ्जलिः दीयते। यथा विश्वख्याताय सतारवादकाय पं.रविशंकर महोदयाय समर्पिता एषा श्रद्धाञ्जलिः त्रैमासिकस्यास्य इतरेभ्यः भिन्नत्वं प्रतिपादयति।

''रविमहोदय भवद्भिः एवं नियन्त्रितास्ते अश्वाः
यथा संगीत - सूर्यास्तो नैवाभूत् कदापि
भारतीय - संगीत - साम्राज्ये।





सतार-वादन-विषये
पृथिव्यैसमुद्रपर्यन्तायाः एकराळिति।
ख्यातिः सम्पादिता स्वर-साम्राज्ये।
भारतरत्नं विश्वरत्नं समजनि।
चराचर-विश्वात्मकता भवद्भिः समासादिता।।''[४७]

''शं करोति इति शमर।
तमसो ज्योतिर्गमयति सः रविः।
शमरस्तावद् संगीतस्य दैवतम्।
रविस्तावत् प्रकाशस्य दैवतम्।
तयोः अद्वैतं नाम भवतां सतार-वादनम्।।''[४८]

- स्फुटरचनाः, स्फुटगीतानि काव्यानि च, व्यङ्ग-गीतानि काव्यानि च, ग्रन्थपरिचयः, नूतनानां विषयाणां मण्डनं, व्यक्तिमत्त्वविकासार्थं उपयुक्त- लेखनसम्पद्, आध्यात्मिक लेखाः, श्रद्धाञ्जलिः, पुण्यस्मरणं चेति विशेषत्वेन अस्मिन् त्रैमासिके प्रकाश्यन्ते।
- समये प्रकाशनं समये च प्रेषणमिति अपरं वैशिष्ट्यं संस्कृत-संवर्धनस्य।
- दीपावलीपर्वे निश्चयेन विशेषाङ्कस्य प्रकाशनं भवत्येव। आवश्यकतां महत्त्वं च दृष्ट्वा वर्षे द्विवारं विशेषाङ्कस्य प्रणयनं भवति।
- मुख्यसंस्थापकः सम्पादकश्च डॉ. मधुसूदनः बोपर्डीकरः महोदयः संस्कृतकार्य-सक्रियतायाः प्रेरणायाः च साक्षात् महानस्रोतः एव।

**कार्यक्षेत्रम्** - 'संस्कृत-संवर्धनम्' इति संस्कृतक्षेत्रे नूतनं संस्कृतनियतकालिकमस्ति अतः अस्य अधिकाधिकं कार्यक्षेत्रं महाराष्ट्रे वक्तुं

शक्यते। किन्तु महाराष्ट्रात् बहिः केषुचित् राज्येषु एव गच्छति न तु समग्रे भारते अस्य नियतकालिकस्य प्रसारो दृश्यते।

**साम्प्रतिकी स्थितिः** – 'संस्कृत-सेवा-सङ्घः' इति अहमदनगरस्थायाः संस्कृतसंस्थायाः आर्थिकी स्थितिः सामान्या अस्ति। अतः अस्याः संस्थायाः 'संस्कृत-संवर्धनम्' इति संस्कृत-मुखपत्रस्यापि आर्थिकी स्थितिः सामान्या एव वर्तते। नियतकालिकस्य अस्य ग्राहकत्वं स्वीकर्तुं वार्षिकं शुल्कं ५०/-रु. आजीवसदस्य-शुल्कं १०००/- रुप्यकाणि सन्ति। उपत्रिशतम् इति अस्य नियतकालिकस्य सम्प्रति ग्राहकसंख्या अस्ति।

संस्कृत-संवर्धनम् इति संस्कृत त्रैमासिकस्य कल्पना एव उत्साहमूर्तेः विदुषः डॉ.मधुसूदन-बोपर्डीकरमहोदयस्य अस्ति। महाराष्ट्रशासनस्य कविकुलगुरु-संस्कृत-साधना पुरस्कारः सादृशैः सुख्यातैः पञ्चदशपुरस्कारैः डॉ. मधुसूदनः बोपर्डीकरमहोदयः गौरवान्वितो विद्यते। विनम्रोत्साहास्य महामेरुः डॉ. बोपर्डीकरमहोदयः तनमनधनैः नियतकालिकमिदं नित्यं प्रकाशयितुं कटिबद्धः दृढनिश्चयी च वरीवर्तते। सङ्घटनकौशले निपुणस्य डॉ. बोपर्डीकर-महोदयस्य सम्पादनमण्डलमपि पाण्डित्यप्राचुर्येण परिपूर्णो विद्यते।

**सम्पादकमण्डलम्**

| | | |
|---|---|---|
| प्रधानसम्पादकः | – | प्राचार्यः डॉ. मधुसूदनः बोपर्डीकरः (संस्कृतं, मराठी, अर्धमागधी, पाली, प्रा.भा.संस्कृतिः, संगीत अलंकारः एतेषु विषयेषु प्राप्तपदवीधरः। बहूनां संस्थानां मार्गदर्शकः अध्यक्षः च।) |
| सहसम्पादकः | – | प्रा.डॉ. श्रीकान्तः केळकरः |
| कार्यकारी सम्पादकः | – | श्री. सुधाकरः देशपाण्डे |



| | | |
|---|---|---|
| सम्पादकाः | – | प्रा.डॉ.सौ. अरुंधती जोशी |
| | – | प्रा.मृदुला गडणीस |
| | – | प्रा.न.ना.कोल्हापुरे |
| | – | डॉ. व. गो.जोशी |

एवं संस्कृतविदुषां गणः सातत्येन संस्कृत-संवर्धनमिति संस्कृतत्रैमासिकम् उत्तमतया संवर्धयितुं प्रयत्नरतो दृश्यते। संस्कृत-संर्वधनम् इति संस्कृत-नियतकालिकस्य यत् केवलं संस्कृतस्य प्रसारस्योद्दिष्टेन प्रणीतमिदं नियतकालिकम् अत्यन्तं नूतनं वर्तते। सम्पादकीय-लेखानाम् अभावोऽस्मिन् नियतकालिके दृश्यते। तथैव अन्यलेखानामपि प्राचुर्याधिक्यं न दृश्यते। किन्तु लेखानां त्रुटिपूर्त्यर्थं सम्प्रति सम्पूर्णं सम्पादकमण्डलं सक्रियम् अस्ति। संस्कृत-त्रैमासिकेऽस्मिन् श्रद्धाञ्जलि-पुण्यस्मरणात्मकं सत्रम् अधिकं दृश्यते। क्वचित् नियतकालिकेऽस्मिन् मराठीभाषाप्रयोगः दृष्टिपथम् आयाति। तथापि उदयोन्मुखस्य अस्य संस्कृत-त्रैमासिकस्य भविष्यम् उज्जवलं वर्तते इत्यत्र सन्देहो नास्ति एव। नियतकालिकं परिपूर्णत्वं यातुम् इतोऽपि कालावसरः अपेक्षितः अस्ति।

साप्ताहिकं, पाक्षिकं, मासिकं, इति सः क्रमो विद्यते अतः आदौ 'संस्कृत-भवितव्यम्' इति साप्ताहिकं, तदनु 'शारदा' पाक्षिकं तदनु 'संस्कृत-बाल-संवादः' इति मासिकं तत्पश्चात् 'गुञ्जारवः', 'संविद्', 'गीर्वाणसुधा','संस्कृत संवर्धनम्' इतीमानि त्रैमासिकानि च प्रस्तुतानि। महाराष्ट्रे प्रकाश्यमानानां संस्कृतनियतकालिकानां सर्वेषामपि अध्ययनेन इदं प्रतिपादयितुं शक्यते यत् महाराष्ट्रे १८७७ तमवर्षादारभ्य २०१९ तमवर्षपर्यन्तं १४२ वर्षाणि यावत् संस्कृत- नियतकालिकानां प्रकाशनपरम्परायां महाराष्ट्रस्य

महत्त्वपूर्णम् अवदानं तु अभिमानास्पदमेव वर्तते। संस्कृत-नियतकालिकेषु च प्राय: सर्वेषु समानता दृश्यते सा समानता नाम संस्कृत-नियतकालिकानाम् उद्दिष्टसाम्यं भाषासारल्यं च। संस्कृतभाषाया: मृतभाषामृषात्वम् अपाकृत्य संस्कृतस्य महत्त्वं तस्या: आवश्यकता चेति सर्वेषु नियतकालिकेषु सर्वाधिक: प्रतिपादितो विषयो वर्तते। भारतस्य राष्ट्रभाषा संस्कृतभाषा भवतु, संस्कृतशिक्षणं भवतु, संस्कृतमाध्यमेन च भवतु सर्वत्र इति विषये संस्कृतनिष्ठानीमानि नियतकालिकानि आग्रहीणि दृश्यन्ते। धर्म-अर्थ-काम-मोक्ष-राष्ट्र-समाजाद्याधृतं विषयवैविध्यं तु सर्वेषामपि संस्कृत-नियतकालिकानां समानं वैशिष्ट्यम्। संस्कृतवार्ता:, सामान्यवार्ता:, ग्रन्थप्रकाशनं, ग्रन्थपरिचय: इत्यादिभि: संस्कृतनियतकालिकानाम् अन्तरङ्गं समानव्याप्तं दृश्यते। संस्कृत-सहित्य-सर्जनार्थं विशेषतया ललित-साहित्यार्थं नूतनरचनाकारेभ्य: प्रोत्साहनं सर्वेषु च संस्कृत-नियतकालिकेषु दीयते इति प्रशंसास्पदम्। संस्कृतप्रणेतृभ्य: स्वसाहित्यप्रकटनार्थं तस्य प्रचारार्थं च नितरामभीप्सिततमा वेदिका नियतकालिकमाध्यमेन उपलब्धा भवति। स्वप्रेदेशीयान् प्रान्तेतरान् संस्कृतलेखकान् तेषां संस्कृत-साहित्यं प्रकाशयितुं प्रोत्साहयितुं संस्कृत-लेखनव्यवसायं च संरक्षितुमपि इमानि नियतकालिकानि महत्त्वपूर्णं दायित्वं वहन्ति।

सम्प्रति महाराष्ट्रे सप्तैव संस्कृत-नियतकालिकानि प्रकाश्यमानानि सन्ति। तेषु चत्वारि त्रैमासिकानि अन्यानि च क्रमश: साप्ताहिकं, पाक्षिकं, मासिकमिति एकैकमेव प्रकाशतां गच्छन्ति। संस्कृत-सम्मेलनेषु एव शारदाद्वारा दैनिकानि प्रकाश्यन्ते। अर्थात् नियतं दैनिकं तथा षाण्मासिकमपि महाराष्ट्रे सम्प्रति नैव प्रकाश्येते। वार्षिकं संस्कृत-नियतकालिकं प्रकाशयितुमपि काचित् पञ्जीकृता संस्था महाराष्ट्रे सद्यस्थितौ न वर्तते।



'संस्कृत-बाल-संवाद:' इति मासिकं विहाय प्राय: सर्वेषामपि संस्कृत-नियतकालिकानां दीपावलीविशेषाङ्क: प्रकाशितो भवति। शारदेति पाक्षिकस्य, संस्कृत भवितव्यम् इति साप्ताहिकस्य च क्रमश: सर्वाधिका: विशेषाङ्का: प्रकाशिता: भवन्ति। महाराष्ट्रस्य नियतकालिकानि महाराष्ट्रं यावत् मर्यादितानि अभूत्वा समग्रे भारते विदेशेषु चापि सहजसञ्चारं कुर्वन्ति। नियतकालिकानां माध्यमेन प्रादेशिकं (महाराष्ट्रियं) साहित्यं सुदूरं सार्वत्रिकं च कर्तुं भूरि साहाय्यं भवति। नियतकालिकेषु संस्कृतमिति विषयाधृतान् लेखान् पठित्वा ज्ञायते यत्, संस्कृतात् अनभिज्ञजनै: स्वदेशीयै: वैदेशीयैरपि बहूनि अपख्यानानि अन्यथाख्यानानि विहितानि विधियमानानि सन्ति। संकृतज्ञा: तानि साधारं खण्डयित्वा भारतीयं युक्तं व्याख्यानं लेखं वा प्रदातुं विभिन्नानि संस्कृत-नियतकालिकानि आश्रयन्ते। नियतकालिकानां माध्यनेन संस्कृतप्रचारार्थं लग्ना: संस्कृतविबुधा: प्राचीनान् सामायिकान् च साधुशब्दान् उद्धृत्य उपयुज्य विवृत्य व्याख्याय च भाषासमृद्धिं साधयितुं प्रयत्नरता: दरीदृश्यन्ते। संस्कृतभाषायां विश्वस्य कोऽपि विषय: शब्दबद्धो भवितुम् अर्हति इतीमानि नियतकालिकानि पठित्वा ज्ञायते। तदर्थं नूतना: शब्दा अपि व्युत्पादिता: दृश्यन्ते नियतकालिकेषु। पूर्वपराणां नियतकालिकानाम् अध्ययनेन सुस्पष्टं भवति यदिमानि सर्वाण्यपि संस्कृत-नियतकालिकानि प्रखर-राष्ट्रभक्त्या सन्ति परिप्लुतानि। भारतस्य भारतीयसंस्कृते: च महिमानं वैशिष्ट्यं च उद्बोधयितुं सर्वेषु नियतकालिकेषु लेखा: ग्रन्थाश्चेति विशेषाग्रहेण बुद्ध्या भूरि प्रमाणेन प्रकाशिता: प्रकाश्यन्तेऽपि।

महाराष्ट्रस्य संस्कृतनियतकालिकानां सर्वेषामपि सम्पादकानां परस्परै: सह मैत्रीपूर्णा: सम्बन्धा: सन्ति। कोऽपि कमपि कदापि न दूषयति उत प्रशंसति एव। स्वकीयाया: पत्रिकाया: ग्राहकत्वं कारयित्वा 'अन्यासां संस्कृत-पत्रिकाणां ग्राहकत्वं स्वीकुर्वन्तु।' इत्यपि इमे सम्पादका: वदन्ति।

संस्कृतस्य प्रसार एव सर्वेषां संस्कृत- नियतकालिकानाम् उद्दिष्टं वर्तते न तु धनार्जनम्। ईदृशं संस्कृतसमर्पणं नूनं संस्कृतजनान् नित्यं प्रेरयति। तथैव एतेषां सङ्घटनं संस्कृतस्य भाविकालस्य संरक्षणार्थं प्रात्साहते। महाराष्ट्रे प्रकाश्यमानानां सर्वेषामपि संस्कृत-नियतकालिकानां सम्पादका: सञ्चालको वा वृद्धा:। उदारचेतस: परिश्रमकठोरा: उत्साहमूर्तय: सर्वेऽपीमे स्वात्मिकतारुण्येन कृतिना च युवकान्नपि लज्जयन्ते। किन्तु एतेषां श्रेष्ठानां वयस: ज्येष्ठत्वं संस्कृत-नियतकालिकानां भविष्यत्काले संवर्धनार्थं संरक्षणार्थम् अस्मान् गहनचिन्तानाय प्रचोदयन्ति। नागपुरस्थाया: संस्कृत-भाषा-प्रचारिणी-सभाया: सुनियोजनत्वात् सभाया: मुखपत्रस्य 'संस्कृत-भवितव्यम्' इति साप्ताहिकस्य सातत्यं रक्षितम् अग्रेऽपि रक्ष्यते। अत: विगतेभ्य: ६९ वर्षेभ्य: संस्कृत-भवितव्यं स्वकीयं नैरन्तर्यं रक्षितुं समर्थं दृश्यते। किन्तु अवशिष्टानां संस्कृत-नियतकालिकानां तादृशी दीर्घकालीना सुनिश्चिता च व्यवस्था सम्प्रति तु न वर्तते इति प्रकर्षेण अनुभूतम्।

महाराष्ट्रस्य संस्कृत-नियतकालिकेषु 'शारदा' 'गीर्वाणसुधा'इति नियतकालिद्वयं धनसम्पन्नं वर्तते। अन्येषां प्रकाश्यमानानां संस्कृत-नियतकालिकानां आर्थिकी स्थिति: सामान्या एव। धनसमस्येति बहुत्र कार्ये बाधारूपेण समुपतिष्ठति। कुत्रचित् शासनात् अनुदानमपि लभते किन्तु तावद्धनम् अपर्याप्तमेव भवति व्यावहारिकदृष्ट्या। तथैव ग्राहकाणां ग्राहकत्व-समाप्त्यनन्तरं तेषां ग्राहकत्वं नवीकर्तुं वृथा शैथिल्यमिति संस्कृत-नियतकालिकानाम् एका महती समस्या। ग्राहकत्व-समाप्त्यनन्तरमपि बहुत्र ग्राहका: नियमिततया संस्कृत-नियतकालिकं प्राप्नुवन्ति। अत्र संस्कृतप्रसारस्योद्दिष्टं नियतकालिकानि साधयन्ति किन्तु व्यावहारिकदृष्ट्या नियतकालिकानां सा आर्थिकी हानिरेव। महाराष्ट्रे वार्षिकाणि संस्कृत -



नियतकालिकानि महाविद्यालयेभ्य: विद्यापीठेभ्यश्च प्रकाश्यन्ते किन्तु तानि महाविद्यालय-विद्यापीठपर्यन्तमेव मर्यादितानि भवन्ति। पञ्जीयनादिकं कृत्वा तानि अधिकृतानि अपि न सन्ति। अत: संस्कृतजनेभ्य: एव दुर्लभानि तानि जनसामान्यं प्रति गन्तुम् अशक्यानि एव। संस्कृत-नियतकालिकेभ्य: ग्राहका: विज्ञापनदातार: संस्कृतलेखकाश्च सन्ति दुर्लभा: इति सम्पादकानां नित्यं वचांसि। तदर्थं ग्राहकत्वं वर्धनीयं, विज्ञापनानि स्वीकरणीयानि, यावच्छक्यं संस्कृतजनेषु संस्कृत-नियतकालिकानां प्रचार: आवश्यक:। अन्यथा न तावदेषा समस्या अपगच्छेत्। पञ्जीकृतानां प्रकाश्यमानानां महाराष्ट्रस्य संस्कृत-नियतकालिकानां विपणनस्य (Marketing) अभाव: प्रकर्षेण अभिलक्ष्यते। अत: संस्कृत-नियतकालिकानां विपणनम् अत्यावश्यकमिति महत्त्वपूर्ण: अंश: वरीवर्तते येन ग्राहकसंख्यावर्धनं निश्चयेन भवितुमर्हति।

महाराष्ट्रे संस्कृतभाषां संवर्धयितुं संरक्षितुं च नियतकालिकानाम् एतेषां प्रयत्न-पराकाष्ठा तेषां संस्कृतसमर्पणं संस्कृतनिष्ठां च नूनम् अभिव्यनक्ति। यत्र संस्कृत-संस्था: गन्तुं सम्पर्कयितुं न शक्नुवन्ति तत्र नियतकालिकानि इमानि प्रतिसप्ताहं प्रतिमासं वा जनसम्पर्कं करोतीति कथने नाहं मन्ये कापि भवेदतिशयोक्ति:। तथैव धनाभाव:, ग्राहकाभाव:, दुर्लभाश्च संस्कृत-रचनाकारा: विज्ञापनदातार: चेति अधिकांशानां संस्कृत-नियतकालिकानाम् अभिमुखी समस्या वर्तते। किन्तु संस्कृत-नियतकालिकानां प्रसिद्धिकरणं (Publicity), विपणनं (Marketing), समये नियतकालिकानां वितरणं, संस्कृतजनानां सङ्घटनेन संस्कृत-प्रणेतृनिर्माणम् इत्यादय: संस्कृत-नियतकालिकानां समस्या: परिहर्तुम् उपाया: भवितुमर्हन्ति। तथापि संस्कृतक्षेत्रे चैतन्यरक्षणस्य मूलभूतं महत्त्वपूर्णं च कार्यं संस्कृत-नियतकालिकानां माध्यमेनैवाधिकं भवतीति अल्पधिया मया अधिगतम्।

# दृष्टिक्षेप:
# महाराष्ट्रस्य संस्कृत-नियतकालिकानि

| | स्वातन्त्र्यपूर्वम् | | स्वातन्त्र्योत्तरम् | | सम्प्रति विद्यमानानि |
|---|---|---|---|---|---|
| १ | षड्दर्शनचिन्तनिका (१८७७, पुणे) | १ | बालसंस्कृतम् (१९४९, मुम्बई) | १ | संस्कृत-भवितव्यम् (१९५१, नागपुरम्) |
| २ | काव्येतिहाससंग्रह: (१८७८, पुणे) | २ | भारतवाणी (१९५८, पुणे) | २ | शारदा (१९५८, पुणे) |
| ३ | काव्यनाटकादर्श: (१८८२, धारवाड:) | ३ | संस्कृति: (१९६१, पुणे) | ३ | संविद् (१९६४, मुंबई) |
| | ग्रन्थमाला (१८८७, मुम्बई) | ४ | संस्कृत-दुन्दुभि: (१९८७,औरंगाबाद:) | ४ | गुञ्जारव: (१९६६,अहमदनगरम्) |
| ५ | काव्यमाला (मुम्बई) | | | ५ | गीर्वाणसुधा (१९७९, मुम्बई) |
| ६ | श्रीपुष्टिमार्गप्रकाश: (१८९३,मुम्बई) | | | ६ | संस्कृत-बालसंवाद: (२००३, रत्नागिरि:) |
| ७ | संस्कृत टीचर (१८९४, मुम्बई) | | | ७ | संस्कृत-संवर्धनम् (२०११,अहमदनगरम्) |
| ८ | कवि: (१८९५, पुणे) | | | | |
| ९ | समस्यापूर्ति: (१९००,कोल्हापुरम्) | | | | |
| १० | वीरशैवमतप्रकाश: (१९०६, पुणे) | | | | |
| ११ | गीर्वाण: (१९२३, नागपुरम्) | | | | |
| १२ | भारतसुधा (१९३२, पुणे) | | | | |
| १३ | मधुरवाणी (१९३५, बेळगाव:) | | | | |
| १४ | मीमांसाप्रकाश: (१९३६, पुणे) | | | | |
| १५ | भारतीविद्या (१९३८, मुम्बई) | | | | |

# सन्दर्भावली

| अ.क्र | सन्दर्भः | वर्षम्, अङ्कः | पृष्ठम् |
|---|---|---|---|
| १ | रा.का. | वर्षम् १०, अङ्कः ४३,४५ | ११ |
| २ | सं.भ. | वर्षम् ६०,अङ्कः ३१,३२ | ३ |
| ३ | सं.प.इ. | | २३ |
| ४ | सं.शु.स्मा. | | १६ |
| ५ | सं.प.इ. | | २५ |
| ६ | सं.शु.स्मा. | | १७ |
| ७ | सं.प.इ. | | १९२ |
| ८ | सं.प. | | २२ |
| ९ | सं.शु.स्मा. | | १७ |
| १० | ल.सं.सा.म.यो. | | १८३ |
| ११ | सं.प.इ. | | ४९ |
| १२ | सं.प.इ. | | ४९ |
| १३ | सं.प.इ. | | ४९ |



| | | | |
|---|---|---|---|
| १४ | सं.प.इ. | | ५३ |
| १५ | सं.प.इ. | | ५३ |
| १६ | सं.प.इ. | | ५१ |
| १७ | सं.प.इ. | | ५१ |
| १८ | सं.प.इ. | | ३९ |
| १९ | सं.प.इ. | | ४७ |
| २० | सं.प.इ. | | १३१ |
| २१ | सं.शु.स्मा. | | १८ |
| २२ | सं.प.इ. | | १०३ |
| २३ | सं.प.इ. | | ८८ |
| २४ | सं.प.इ. | | १२४ |
| २५ | सं.प.इ. | | १०७ |
| २६ | सं.प.इ. | | ९६ |
| २७ | सं.प.इ. | | ६९ |
| २८ | सं.प.इ. | | ५६ |

| | | | |
|---|---|---|---|
| २९ | सं.प.इ. | | ५६ |
| ३० | सं.भ. | वर्षम् १, अङ्कः  १ | १ |
| ३१ | सं.शु.स्मा. | | २० |
| ३२ | शारदा | वर्षम् १९, अङ्कः  १४,१५ | ५ |
| ३३ | शारदा | (पत्रकम्), मार्च २००० | १ |
| ३४ | शारदा | वर्षम् ५३, अङ्कः  ८,९ | १० |
| ३५ | शारदा | वर्षम् ३८, अङ्कः १०,११,१२ | १४ |
| ३६ | शारदा | वर्षम् ८, अङ्कः  १५,१६ | ३ |
| ३७ | सं.बा. | जुलै २००४, सञ्चिका १ | १ |
| ३८ | गुञ्जा. | वर्षम् ४०, अङ्कः  १ | १ |
| ३९ | गुञ्जा. | वर्षम् ४०, अङ्कः  १ | २ |
| ४० | गुञ्जा. | वर्षम् ४७, अङ्कः  १ | ४ |
| ४१ | मालवि. | १।२।। | |
| ४२ | गुञ्जा. | वर्षम् ४७, अङ्कः  ३ | ३ |
| ४३ | गुञ्जा. | वर्षम् ४०, अङ्कः  १ | ६ |



| | | | |
|---|---|---|---|
| ४४ | संविद्. | वर्षम् १४, अङ्कः २ | ४२ |
| ४५ | संविद्. | वर्षम् ३४, अङ्कः  २ | ५७ |
| ४६ | गी.सु. | आक्टो.१९७९ | १ |
| ४७ | सं.सं. | वर्षम् २, अङ्कः  २ | २ |
| ४८ | सं.सं. | वर्षम् २, अङ्कः  २ | २ |

*यच्च मनसि चिन्त्यते यच्च कीर्त्यते गिरा*
*तच्च मूर्तरूपताम्, एति नित्यजीवने ।*
*जनन्यनन्यचरणयोः समर्पितस्वजीवनाः*
*ध्येयसाधनव्रताः वयं भवेम सङ्गताः।।*

***ॐ***

## * वैयक्तिकी *

**नाम** – डॉ.सौ. कल्याणी अनन्त: काळे
(कु.राधिका दिगम्बरराव: अपराजित)

**सङ्केत:** – ८६, सनराज पुष्कर सदनिका, स्वावलंबीनगरम्, नागपुरम्

**शिक्षणम्** –

- एम.ए.(भारतीयदर्शनशास्त्रम्, क.का.सं.वि. रामटेकम्)
- एम.ए. (संस्कृत साहित्यशास्त्रम्, रा.तु.म. नागपूर-विद्यापीठम्)
- एम.फिल. (भारतीयदर्शनशास्त्रम्, क.का.सं.वि., रामटेकम्)
- पीएच.डी.(संस्कृतम्, रा.तु.म.नागपूर विद्यापीठम्)

**प्रकाशनम्** – रम्या रामायणी कथा, संस्कृतभारती प्रकाशनम्, नवदेहली (फेब्रुवारी, २०१२)
– Samskrit for Technical Knowledge
श्री मंगेश प्रकाशनम् (जानेवारी २०१९)

**अन्यकार्याणि** –

- AICTE (All India Council for Technical Education) अन्तर्गतस्य 'एम.टेक.ऑडिट कोर्स' कृते अभ्यासक्रमरचनायां तथा पाठ्यपुस्तकनिर्माणे सहभाग:।
- राष्ट्रियन्ताराष्ट्रियपरिषत्सु शोधपत्रप्रस्तुतीकरणम्।
- सरल-मानक-संस्कृतस्य व्याख्यात्रीरूपेण व्याख्यानदानम्
- 'संस्कृतभारती' पक्षत: नैकानां संस्कृत-सम्भाषण-शिबिराणाम् आयोजनं सञ्चालनं च।
- नागपुरस्थायाम् आकाशवाण्यां संस्कृतकार्यक्रमेषु सहभाग:।
- 'संस्कृतभारती' नागपुरमहानगरस्य शिक्षणप्रमुख इति दायित्वम्।
- 'संस्कृतसंवर्धन-मण्डलम्', संगमनेर: इति संस्थाया: आजीवं सदस्यत्वम्।
- सम्प्रति राष्ट्रीय-संस्कृत-संस्थानम्, नवदेहली इत्येतस्य अनौपचारिक-संस्कृत-शिक्षणकेन्द्राणां सञ्चालनम्।